ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

३४ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २००९ ई०

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

३४ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २००९ ई०

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

प्रकाशकः

**कुलपतिः,**

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानित-विश्वविद्यालयः)

कुतुब इन्स्टीट्यूशनल एरिया,

नवदेहली-११००१६



ISSN :- 0974 - 8946

३४ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २००९ ई०



मुद्रकः

**अमरप्रिंटिंगप्रैसः**

दिल्ली

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनु-सन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रतिकृति प्रेषयितव्ये। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ,** नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट, पोस्टल आर्डर अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

संस्कृतमिति पदं संस्कृतभाषा-वाङ्मयोभयबोधकम्, यदुपजीव्य जीवनस्यान्तरं स्वरूपं ज्ञापयति संस्कृतिः, जीवनस्य जगतश्च परमोच्चभूमिं गतेनात्मना सात्त्विकमननचिन्तनाभ्यां यदनुभूयते "इदं विश्वस्मै विश्वाय हितकरमिदञ्च सुखकरं तत्संस्कृतौ समाविष्टम्। तपःस्वाध्यायपवित्रितान्तःकरणैः प्रबुद्धविशुद्धैः ऋषिभिरुद्भाविता भारतीया संस्कृतिः सभ्यता चोद्भावकोदारस्वभावहृदयनैर्मल्यविशिष्टाद् विश्वजनीनहिताय विश्वजनसुखाय च जाते। सा प्रथमासंस्कृतिर्विश्ववारेति प्रशस्यते विश्वैर्वरणीयेति उदीर्यते। अस्मिन् संसारे संस्कृतेः सभ्यतायाश्च कथङ्कारं विकासोऽभूदित्यर्थं वेदानुशीलनमनिवार्यं भवति। तदित्थं तदुक्तं सिद्धान्तात्मकं ज्ञानं संस्कृतिः, संस्कृतेरनुरूपं सदाचरणम्, सभ्यवेशः, मधुरं प्रियं सत्यसंलापादिकञ्च सभ्यता। ते संस्कृतिसभ्यते एकस्यैवादर्शतां गतस्य जीवनस्य आन्तरं बाह्यं स्वरूपं भवति। ज्ञानक्रिययोराचारविचारयोश्च सामञ्जस्यं सर्वत्र देशेऽत्र यदासाद्यते तदस्य पूर्णं विकासं सूचयति। ज्ञानं विना कर्म अन्धम्, कर्मणा विना ज्ञानं पङ्गु, भक्त्या विना ज्ञानं हृदयहीनं कर्म च निष्करुणं भवतीत्यत्रोपासनायां ज्ञानकर्मभक्तित्रितयस्य समरसताऽपेक्ष्यते। यदा च संस्कृतिरार्षवचननिरपेक्षा स्वभावे चागच्छति, तां पालयितुं मनः स्वतः प्रवर्तते, तदा सा सभ्यता भवति। रामायणकाले संस्कृतिरियमतीवोन्नतेति सर्वैः काव्यशास्त्रिभिः प्रवृत्तिशिक्षणाय राम एवोदाहारि-रामादिवद्वर्तितव्यमिति, रावणस्तु निवृत्तिशिक्षणायोपात्तः। तत्र काले स एकल एव, अन्ये तु तद्विपरीता केवलं तस्य भयेन तमनुसरन्ति स्म। तदेवमत्र सर्वं चिन्तनं विश्वपरकं, विश्वं हि सुरक्षितं चेत्सर्वं प्रातिस्विकं जगत् सुरक्षितमिति। विज्ञानस्योपरि अध्यात्मवादस्य नियन्त्रणमावश्यकम् तच्च स्वतोगृहीतं भवति, येन नियमिता वैज्ञानिका मानवविनाशाद् विरताः स्युः, यद्येकतो वादा संघर्षं कलहं शिक्षयन्ति, अपरतो मानवीयमावतनायाः शान्तिमुपदिशति। मानवतायाः सन्धायकमिदमुदारं संस्कृतवाङ्मयं शान्तिं जपति पठति उपदिशति चेतियं संरस्वती श्रुतिमहती न हीयताम् किन्तु महीयताम्। कर्तव्यं भवत्यस्माकं तस्या जीवातु-प्रदानेन रसायनचिकित्सया पुनर्यौवनसंपादनेनोज्जीवनमुन्मेषणं च तदपि च तस्या आश्रयभूतस्य संस्कृतस्य उज्जीवनेन संरक्षणेन च।

तद्दिशि प्रवृत्तेयं शोधप्रभानाम्नी शोधपत्रिका आन्तरदौर्बल्यमपनेतुं स्वस्थैः पथ्योपमैरौषधैर्द्यावद्वस्तु-बलोदयम्। तदस्याः प्रयासं सङ्कल्पं प्रस्तुतं च नैवद्यमङ्गीकृत्य सफलयन्तु सुधिय इति।

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

सम्प्रति विश्वविद्यालयेषु निर्धारिता ये पाठ्यक्रमाः, तेषु अनुसन्धानात्मकः पाठ्यक्रमः मूर्ध्नि स्थितो दृश्यते। आङ्गलभाषायां रिसर्चशब्देन व्यवहृतस्यास्य पाठ्यक्रमस्य कृते शोधः, गवेषणा, अन्वेषणा, अनुसन्धानप्रभृतयः शब्दाः प्रयुज्यन्ते। इमे सर्वेऽपि शब्दाः प्रायः आङ्गलभाषायाः रिसर्च इतिशब्दमेव मनसि निधाय प्रचलिता भवन्ति। फलतः शोधस्य पाश्चात्यसरणिमेव सङ्केतयन्ति। भारतस्य प्राचीनाध्ययनपरम्परायां सूत्रग्रन्थेषु प्रच्छन्नरूपेण निबद्धानामर्थानां प्रकाशनाय सूक्ष्मविवेचनपुरस्सरमनुसन्धानं द्योतयन्तो भाष्यम्, वृत्तिः, विवृत्तिः, व्याख्या, टीका, टिप्पणीप्रभृतयः शब्दाः प्रयुक्ता दृश्यन्ते । भारतीयपरम्परायां विद्यायाः प्रवाहः गुरोः सकाशाज्जायते। अतएवोच्यते- वंशो द्विधा, विद्यया जन्मना च। विद्यावंश उत्कृष्टतरो भवति जन्मवंशात् मुखाद् जायमानत्वात्। गुरोः सकाशादधीतस्य विषयस्य अध्यापनं विधाय शिष्य ऋष्यृणान्मुक्तो भवति। गुरोः सकाशाद् विद्यां समधिगम्य शिष्यः तस्या विद्यायाः विकासाय निरन्तरं प्रयतते। विद्याऽपि क्रमश एव सिद्धा भवति। अत एव महाभाष्ये मुनिना पतञ्जलिना प्रोक्तं यत्- चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति- आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति। नैषधमहाकाव्येऽपि विद्यायाः चातुर्विध्यं निर्दिष्टमस्ति। एवं सुस्पष्टमिदं यत् भारतीयपरम्परायां व्यवहारमुखा विद्या विद्यते। ऋषित्वमूला विद्या नवनवोन्मेषशालिनीं प्रज्ञां विना नैव सम्भाव्यते। तस्याः सूत्रभाष्यात्मकोऽनुसन्धानगर्भनिर्भरः प्रवाहः पाश्चात्यपद्धतिमतिशेते नितान्तम्। एवंविधायाः विद्यायाः विकासार्थं प्रतिबद्धा शोधप्रभा सततं किञ्चिन्नवीनं तत्त्वमुद्दीपयति प्रत्यङ्कम्।

विविधविषयविश्लेषपराः षोडश लेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो० रमेशकुमारपाण्डेयः**
सम्पादकः

# विषयानुक्रमणिका

## संस्कृतविभागः

## हिन्दी विभाग

# दुहिताऽपि दायाद्यमर्हति

डॉ० सुन्दरनारायणझा

सर्वविदितमेवैतद्यदद्यास्मिञ्जगति सर्वत्रैतादृशी चर्चा बाहुल्येन(भूयमाना) प्रचलति यद्दुहितुर्दायादं भवेन्न वेति? विषयेऽस्मिन् यद्यपि पक्ष-प्रतिपक्षाणाम् (वादि-प्रतिवादिनां) अधिवक्तारो स्वीयाध्ययनानुभव-तर्केतिहासप्रमाणादिभिः स्वं स्वं पक्षमुपस्थापयन्तः न्यायालयेषु केवलं तिथीनामुपरि तिथीनवाप्य वक्तव्यं प्रस्तुवन्ति, परं न तत्र कश्चिन्न्यायः निर्णयो वा समाजकल्याणाय सर्वविधसमस्यानिवारणाय च समागच्छति। साम्प्रतमेषा समस्या समाजे भयङ्कररूपधारिणी सुरसैव विशालानना (विस्तृतानना) विद्यमानाऽस्ति। नास्याः समाधाने कश्चित्समर्थो भवतीति वक्तुं शक्यते।

यद्यप्यद्यत्वे कश्चिदपि मनुष्यः पुत्रीं न वाञ्छति, फलतोऽनेकत्रैतादृशः विषयः श्रुतो (प्रकाशितो) भवति यदनेन गर्भनाशः कृतः। वस्तुतः सर्वकारीया व्यवस्था तु तन्निराकरणाय वर्तते, परं कः सर्वकारीयं नियमं सम्यक् परिपालयति। यो हि मानवः कयाऽपि दृष्ट्या असमर्थः असहायो वा भवति स एव तत्र दण्डभाग्भवति। किन्तु ये मानवाः धनिनः सर्वकारीयानाम् अधिकारिजनानां प्रियाः क्रेतारो वा भवन्ति ते नियममुलङ्घ्य स्वतन्त्रतया सर्वत्र भ्रमन्ति। एतादृशाः अधिकारिणः, धनिनो जनाश्च निरङ्कुशा भवन्ति। अस्त्यत्रावश्यकता अङ्कुशस्य।

वस्तुतः कस्याश्चिदपि समस्यायाः परम्परासम्बद्धायाः सामाजिक-राजनैतिक-आर्थिक-नैतिक-चारित्रिक-धार्मिक-सामुदायिक-वैज्ञानिक-विचारधारयानुस्यूतायाः समाधानं वयमन्वेष्टुं वेदे एव प्रभवामः। अस्याः समस्यायाः निदानमपि वेदे द्रष्टव्यम्। यतः वेदा एवास्माकं जीवनाधायकाः सभ्यता-संस्कृतेश्च मूलाधाराः सन्ति। तस्माद्वेदेषु यदुक्तं तदस्माभिर्प्रमाणरूपेण गृह्यते। वेदाः स्वतः प्रमाणमिति उक्तमेव[१]। तस्माद्वैदिकविचारधारया पश्यामस्तावद्यद् वेदेषु दुहितरो दायादमर्हन्ति न वेति?

अत्रेदं विचार्यते-यत्पूर्वमुक्तमपेत्य यस्मात्पितुः सकाशात्तद् भवति तस्मादपत्यमिति। तदिदमुभयोरप्यपत्यत्वं प्राप्तं दुहितुः पुत्रस्य च। दुहिताऽपि पितुः सकाशात् उत्पन्ना भवति। तदेवं सति

१. शतपथब्राह्मणे उपोद्घाते ५तमे पृष्ठे।

उभयोर्दुहितृपुत्रयोरपत्यकार्याणि दायाद्यादीनि अविशेषेण प्राप्नुवन्ति, इति। तत्र धर्मविदो पक्षद्वयमाश्रित्याहुः। एके आचार्याः दुहितुरपि दायाद्यम्भवति। अपरे तु पुत्रस्यैव दायादः न दुहितुरिति मन्यन्ते। तत्र दुहिताऽपि यथा दायाद्यमर्हति तथेयमृचि–

**शासद्वह्निर्दुहितुर्नप्त्यङ्गाद्विद्वाँऋतस्य दीधितिं सपर्यन्।**
**पिता यत्र दुहितुः सेकमृञ्जन्त्संशग्म्येन मनसा दधन्वे॥[१]**

ऋतपदमिह यज्ञविशेषमाचष्टे प्रजननाख्यम्। तदपि प्रजननं संतानोत्पादनं यज्ञ एवेति नैगमा मन्यन्ते। तत्प्रजननयज्ञस्य उद्वोढा=वह्निः, दीधितिं=विधानं, सपर्यन्=पूजयन्, दुहितुः=तस्यामुत्पादितायाः कन्यायाः पुत्रभावं=पुत्रत्वं शासत्=प्रशास्ति। यतोऽसौ नप्त्यं=नप्तारं, गात्=उपागमत्। यस्य ऋङ्मन्त्रस्यार्थं कुर्वता यास्केनोक्तं निरुक्ते–

''प्रशास्ति वोढा सन्तानकर्मणे दुहितुः पुत्रभावम्। दुहिता दुर्हिता, दूरे हिता, दोग्धेर्वा, नप्तारमुपागमद् दौहित्रं पौत्रमिति, विद्वान् प्रजननयज्ञस्य, रेतसो वा, अङ्गादङ्गात्सम्भूतस्य हृदयादधिजातस्य मातरि प्रत्यृतस्य विधानं पूजयन्नविशेषेण मिथुनाः पुत्रा दायादा इति।''[२]

यथैव हि पुत्रजनने प्रजननयज्ञस्तन्यते तथैव हि दुहितृजननेऽपि। यैरेव मन्त्रैर्येनैव च विधानेन पुत्रगर्भ आधीयते तैरेव मन्त्रैस्तेनैव च विधानेन दुहितृगर्भोऽपि। एवं येनैव हि विधानेन पुत्रजनने रेत उत्सृज्यते तेनैव हि दुहितृजननेऽपि, तत्रैवं सति रेत उत्सर्गविध्यविशेषात्प्रजननयज्ञातवशेषाद्वा अविशेषेण मिथुनाः पुरुषाः स्त्रियश्च उभयेऽपि दायादा इति एवमेके धर्मविदो मन्यन्ते।

**अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे।**
**आत्मा वै पुत्र नामासि स जीव शरदः शतम्॥ इति**
**अविशेषेण पुत्राणां दायो भवति धर्मतः।**
**मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत्॥[३]**

इत्येतदृक्श्लोकाभ्यां यास्काचार्येणाभ्युक्तम्। तदेतत् अविशेषेण मिथुनाः पुत्रा (पुत्राः दुहितरश्च) दायादा इति। ऋगर्थप्रतिपादकाभ्यां श्लोकाभ्यां गोभिलेन मनुना चोक्ताभ्यामाभिमुख्येन उक्तम्। परमेके आचार्याः न दुहितरो दायाद्यमर्हन्तीत्याहुः।

अत्रार्थे ब्राह्मणं प्रमाणयति–

---

१. ऋ.सं. ३/२/५
२. निरुक्ते ३/१/४
3. निरुक्ते ३/१/४
4. निरुक्ते ३/१/४

''तस्मात्पुमान्दायादोऽदायादा स्त्रीति''[४] विज्ञायते। एतस्मिन् ब्राह्मणे ज्ञायते यन्न दुहितरो दायाद्यमर्हन्ति किन्तु पुमानेवार्हतीति। अपरञ्चापि–

''तस्मात्स्त्रियं जातां परास्यन्ति। न पुमांसमिति च''।[१] अर्थात् पुत्रेण हि पैतृकं सर्वं शर्म (धर्मकर्म) निर्वाह्यते नापुत्रेणेति परस्मै यच्छन्ति। तस्मात्पुमानेव पैतृकस्य वित्तस्येष्टे न दुहिता। तदेतदत्र दृष्टान्तं मन्यते।

''अथ यत्स्थालीं परास्यन्ति हवनकर्मणो न तया जुह्वति। न दारुमयं परास्यन्ति हवनकर्मणो दारुमयेनैव जुह्वति''[२] इति। किञ्च–

**स्त्रीणां दान-विक्रयातिसर्गा विद्यन्ते न पुंसः॥[३]**

अर्थात् प्रदीयते हि परस्मै स्त्री। विक्रीयते च वैवाहिकेन शुल्केन। न पुमांस्तथा च भगवता वासुदेवेनाप्युक्तं सुभद्राहरणे–

**विक्रयश्चाप्यपत्यस्य मतिमान् को नु मंस्यते।**
**अख्यो वाथ बहुर्वापि विक्रयस्तावदेव सः॥[४]** इति।

अर्थाच्छुल्केन प्रदानं, विक्रयश्च कन्यकाया इत्युपपद्यते। पुरुषोऽपि दानविक्रयातिसर्गा विद्यन्त एव। पुरुषोऽपि हि परस्मै दीयते। एवं ह्युक्तं-''दत्तक्रीतककृत्रिमक्षेत्रजौरसाः पुत्राः''[५] इति। वह्वृचानां शौनः शेपाख्यानं वेदे, भारतादौ च दृश्यते। अजीगर्तस्य त्रयः पुत्रा आसंस्तत्रोत्तमोऽन्त्येष्ट्याद्यधिकारितया पित्रा रक्षितः कनीयांश्च मात्रा स्नेहानुबन्धादित्येवमुक्ते क्रेताह ''विक्रीतं मध्यमं मन्ये'' इति। स एव शुनः शेपोऽमुना सुवर्णसहस्रेण क्रीतो हरिश्चन्द्रायार्पितो मधुच्छन्दस आदिनां तस्मादनैकान्तिकत्वादेषां हेतूनामुभयोरपि दायाद्यमित्येके मन्यन्ते।

एवमुपर्युक्तैस्सप्रमाणविवेचनैरिदं स्फुटं भवति यन्न केवलं पुत्राणामेव पितुर्धने[६] सर्वाधिकार अपितु पुत्रीणामपि पुत्राणामधिकारो वर्तत एव। यदिदानीं पैतृकसम्पत्तौ केवलं पुत्राणामधिकारपरम्पराऽवलोक्यते सा तु वेदोत्तरकालीनयुगे बाह्याडम्बरप्रकल्पकैरात्मानं पूज्यं[७] मन्यमानैः स्वार्थान्धैरल्पज्ञैश्च प्रतिपादिता।

---

१. निरुक्तम् ३/१/४
२. उल्लेख : निरुक्ते ३/१/४
३. निरुक्ते ३/१/४
४. निरुक्ते ३/१/४
५. निरुक्ते ३/१/४
६. पैतृकसम्पत्ताविति।
७. पण्डितम्

अनन्तरं गच्छता कालेन सैव परम्परा पुरातनी सप्रमाणा सर्वसमाजैराद्रिता सर्वत्रान्धचक्षुषैव प्रतिष्ठिता जाता। परमधुना वैज्ञानिके युगे अन्धविश्वासरहिताः बहवो जनाः तिष्ठन्ति, ते एतद्विषयं सम्यगवगन्तुं समर्था भवितुमर्हन्ति। ते पुरातनान्धपद्धतिं विहाय वैदिकपरम्परायां जीवितुमभिलषन्ति। तस्मात्तेषां मार्गदर्शनायैतत्तथ्यं वैदिकप्रमाणपुरस्सरं लिखितरूपेणोपस्थापयितुमहमुत्सहे।

श्रौतयज्ञमीमांसाकारेण युधिष्ठिरमीमांसकेनैतादृशमेव भ्रमं भृशमुत्पादितम्। तेनोक्तं यत्प्राचीना यज्ञा अवैदिकभावनाभ्यः सर्वथा विरहिता आसन्। किन्तूत्तरकाले दर्शपूर्णमाससदृशेषु विशुद्धेषु यागेष्वपि अवैदिकविचाराणां सम्मिश्रणमभूत्। तद्यथा–

सम्प्रति प्रवर्तमाने दर्शपौर्णमासनामकश्रौतयागे पुत्रीं प्रति हीनभावनाया निदर्शकानि वचनानि प्रयुज्यन्ते। तानि यजमानः प्रयाजसंज्ञकेषु यागेषु प्रतियागं आशीरूपेण पठति–

प्रथमप्रयाजानतरम्–''एको ममैका तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः। इत्थमेव द्वौ मम द्वे तस्य; त्रयो मम तिस्रस्तस्य; चत्वारो मम चतस्रस्तस्य; पञ्च मम न तस्य किञ्चन''[१]

अत्र यजमानः स्वार्थं पुत्राणां कामनां करोति यं च स द्वेष्टि तस्मै पुत्रीणां कामनां करोति। वस्तुतः पुत्राणां पुत्रीणाञ्च मध्ये भेदभावनायाः प्रादुर्भावो बहूत्तरकालं बभूव। अस्या भावनायाः परिणतिः सद्य उत्पन्नायाः पुत्र्या वधेऽभूत्।

अस्य मतस्य खण्डनं कुर्वता श्रीमता हरिहरानन्दसरस्वतिना ''करपात्रस्वामिना'' वेदार्थपारिजातनाम्निग्रन्थे २९९० तमे पृष्ठे एवं प्रतिपादितम्–''उद्देशत्यागानन्तरं तत्तद्यागमनु यजमानेन पठ्यमानो मन्त्रः अनुमन्त्रणमन्त्र इति कथ्यते न त्वाशीर्मन्त्रः। तत्र पञ्चानामपि प्रयाजानां पञ्चानुमन्त्रणमन्त्रास्सन्ति–''एको ममैका तस्य, द्वौ मम द्वे तस्य, त्रयो मम तिस्रस्तस्य, चत्वारो मम चतस्रस्तस्य, पञ्च मम न तस्य किञ्चन'' इति। अत्र लेखको दोषमुद्भावयति। वक्रतायामप्रतिहता गतिर्लेखकस्य। मन्त्रे संख्यावाचकशब्देषु एकः एका, द्वौ द्वे, त्रयः तिस्रः, चत्वारः चतस्रः एवं पुँल्लिङ्गशब्दैर्वृक्षा उच्यन्ताम्, स्त्रीलिङ्गशब्दैश्च लता उच्यन्ताम्। तत्र पुत्रपुत्र्योरेव ग्रहणं कर्तव्यमिति न निर्बन्धः। संख्यावाचकशब्देषु चतुश्शब्दपर्यन्तमेव लिङ्गद्वये भिन्नरूपाणि भवन्ति, पञ्चप्रभृतिषु शब्देषूभयत्र समानं रूपमिति प्रदर्शयितुं मन्त्रा इमे सन्तीति कथने को दोषः? अत एव शतपथब्राह्मणस्येयमाख्यायिका–''असुरराक्षसैस्सह देवा अस्त्रैश्शस्त्रैश्च युद्धं कुर्वन्तः पराजयमवाप्य सम्भूय निश्चितवन्तः यद् वाग्युद्धं कुर्मः इति। तादृशाश्शब्दा उच्चारणीयाः यैश्च मिथुनभावः प्रतीयेत इति समयं विधाय प्रथममिन्द्रं व्याहर्तुं प्रवर्तितवन्तः। स आह–एको ममेति। इतरे च एका ममेति। द्वौ मम, द्वे ममेति क्रमेणोक्ते इन्द्रः पञ्चममेत्युक्तवान् इतरेऽपि पञ्चममेत्युक्तवन्तः। अनेन वाग्युद्धेन पराजिता असुरराक्षसा इति।''[२]

---

१. का. श्रौ. सू. ३/३/२-४

२. श. प. ब्रा. १/५/४/१२

**अस्तु। एकः एका इत्यादिशब्दैः पुत्रः पुत्री च गृह्यत इति॥**

तत्र पुत्र्या हीनभावः कथमुन्नीयते? अहं पुत्रं कामये न कन्याम्। अपरः कन्यां कामयते न पुत्रम् (यथा-सगरः)। एतावता मन्त्रोऽयं समाजे पुत्रीविषयं हीनभावं जनयतीति कथं साध्यते?

एतन्निदर्शनेन युधिष्ठिरमीमांसककरपात्रमहोदययोस्संवादेनाहं इदमेव स्पष्टयितुं वाञ्छामि यत् कस्याप्येकस्यैव लेखकस्य चिन्तकस्य उतवा मतस्यालम्बनं तु कर्तव्यं परम् अन्धविश्वासेन कदापि न कर्तव्यम्। तत्र किमुचितं किमनुचितमितिपूर्वं विचारणीयमेव। विचाररहितो भूत्वा कस्याप्यवलम्बनं हिताय न भवति। तदुक्तं केनचिद्धिन्दीभाषीकविना–

**बिना विचारे जो करे सो पीछे पछताय।**
**बिगड़े पर गदहा बने लाद-लाद मर जाय॥**

अतः पुत्रीणामपि तावदेवाधिकारो पैतृके धने यावत्पुत्रस्य, लेशमात्रमपि तत्र न्यूनता नास्ति। उभावपि मातृगर्भे दशमासपर्यन्तस्य कालं यापयतः, उभावपि मातुः रूधिरमांसैनिर्मितं दुग्धं पिबतः, उभयोर्लालनं पोषणञ्च पितुर्गृहे समानरूपेणैव भवति। यदि पुत्र आत्मज इति तर्हि पुत्री अपि आत्मजैवोच्यते। सा भर्तुर्गृहं गच्छति इति सत्यं परं तत्र गत्वा पित्रोः हितकारिणी, सुश्रुषा शालिन्येव भवति दुःखदायिनी कदापि न। परं पुत्रस्तु मातापितरं क्षणे-क्षणे तथा ताडयति येन तयोर्हृदयं विच्छिन्नं भवति। पुत्री तु श्वसुरगृहगमनकाले एव केवलं रोदयति पुत्रस्तु प्रत्यहं रोदयति। पुत्री एकबारमेव धनव्ययः विवाहकाले कारयति पुत्रस्तु आजीवनं पितुर्गहे उपविश्य खादति।

अत एव सम्यग् विचारणीयम् धीरैर्यदुभयोर्दायाद्यं सिध्यति न वेति। यदि सिध्यति तर्हि भारतीय संविधाने आवश्यकतयाऽस्य नियमस्य पालनार्थं कश्चिन्नियमो भवेत्।[१] सर्वसमाजेषु एषा प्रथा प्रचलिता भवेदेव। नास्त्यत्र काचिद्विप्रतिपत्तिरिति तावन्मामकीनं मतम्।

---

१. नियमोल्लङ्घने सति कठिनदण्डव्यवस्था न्यायालयेन/सर्वकारेण निर्धारणीया।

# स्फोटवादः

डॉ॰ ऊदलकुमारः

कः शब्दोऽभिप्रेतः? वर्णाः के? शब्दार्थसम्बन्धः नित्यः कार्यो वा? विविधशास्त्रेषु विशेषतः शाब्दिकसिद्धान्ते स्फोटस्य महती चर्चा विद्यते। अस्य वादस्य कदा कुतः च प्रारम्भो जातः इत्यस्मिन् विषये इतिवृत्तस्य पृष्ठानि च किञ्चिदपि प्रकाशयन्ति।

'अवङ् स्फोटायनस्य'[१] इति सूत्रे स्फोटशब्दः प्रयुक्तो विद्यते। हरदत्त अस्य स्फोटायनपदस्य व्याख्याम् एवं ददाति–'स्फोटोऽयनं पारायणं यस्य च स्फोटायनः स्फोटप्रतिपादनपरो वैयाकरणाचार्यः।[२] स्फोटवादे अन्ते नागेशेनापि स्वीकृतं यत् स्फोटायनर्षेरेव सिद्धान्तः स्फोटवादः–

**वैयाकरणनागेशः स्फोटायनर्षेर्मतम्।**
**परिष्कृत्योक्तवांस्तेन प्रीयतां जगदीश्वरः।।**[३]

यास्काचार्योऽपि निरुक्ते प्रारम्भे आचार्यौदुम्बरायणस्य शब्दानित्यत्वमतं प्रत्याख्याय शब्दस्य नित्यत्वं व्यापकत्वमणुत्वं च स्थापितवान्। निरुक्तभाष्यकारः दुर्गाचार्यः अत्रैव स्फोटं प्रतिपादितवान्–व्याप्तिमत्वात्तु शब्दस्याणीयस्त्वाच्च।[४] एवं स्फोटस्येतिहासोऽतीव प्राचीनो वर्तते। अमुं स्फोटमुद्दिश्य विभिन्नशास्त्रेषु विभिन्नानि मतानि प्रचलितानि सन्ति।

**वैयाकरणाः**–स्फोट एव वाचकः न तु वर्णाः। स्फोटानुभवानन्तरं अर्थः ज्ञायते। क्रमेण वर्णपदवाक्यस्फोटानन्तरम् एव वाक्यार्थः अवगम्यते। 'यथा रत्नपरीक्षिणः परीक्षमाणस्य प्रथम-समाधिगमानुपाख्यातमनुपाख्येयरूपप्रत्ययोपाहितसंस्कारविशेषायां बुद्धौ क्रमेण चरमे चेतसि चकास्ति रत्नतत्त्वम्। न ह्यन्यथा स्फुटप्रकाश उपपद्यते पुर इव पश्चादपि विशेषाभावात्।[५]

प्रथमवर्णः स्फोटमस्फुटमभिव्यञ्जयति, द्वितीयः स्फुटम्, तृतीयः स्फुटतरम् चतुर्थः स्फुटतममित्येवं विधिना अर्थावधारणा भवति। तदुक्तं हरिणा–

---

१. अष्टाध्यायी सूत्रसंख्या ६/१/२३
२. पदमञ्जरी कशिका ६/१/१२३
३. स्फोटवादः
४. निरुक्तम्
५. स्फोटसिद्धिः

**प्रत्येकं व्यञ्जका: वर्णा: भिन्ना वाक्यपदेषु ये।**
**तेषामत्यन्तभेदेऽपि सङ्कीर्णा इव शक्तय:॥**

व्याकरणदर्शने स्फोट: शब्द: ध्वनिशब्दगुण:। भेर्याघातस्थले ध्वनि: स्फोटश्च भवत:। व्यञ्जका ध्वनि: स्फोटो व्यङ्ग्यश्चेत्यर्थ: किन्तु व्यङ्ग्यानां स्फोटरूपाणां शब्दानां व्यञ्जकत्वेन सम्बन्धी यो ध्वनि: स एवाल्पो महांश्च भवति। व्यङ्ग्य: स्फोटस्तु अभिन्नकाल एवेत्यर्थ: तस्मात् सर्वविधदोष-परिहारात् आवश्यकत्वाच्च वर्णध्वनिव्यतिरिक्त: स्फोट: वैयाकरणै: स्वीक्रियते।

महामुनि: पाणिनिरतिप् स्फोटं स्वीकरोति। तथा हि—प्रातिपदिकसंज्ञाविधायकमर्थवदधातुरप्रत्यय: प्रातिपदिकम् इत्यस्मिन् सूत्रे अर्थविषयकबोधयुक्तस्य प्रातिपदिकसंज्ञा करोति। यस्मिन् शब्दे अर्थबोधकत्वरूपा शक्तिस्तस्य प्रातिपदिकसंज्ञेति सूत्रार्थ:। अर्थबोधकत्वरूपा शक्ति: कुत्र तिष्ठेत् शब्दानित्यत्वे आश्रयाभावात् तत् स्थित्यनुपपत्तेरिति सूत्रवैयर्थ्यापत्त्या नित्य: स्फोट: इति निश्चीयते।

भगवान् भाष्यकार: येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्द:[१] इत्याह। स्फोटस्योच्चारणम् असम्भवमस्ति। अत्र प्रदीपकार: स्पष्टं करोति—वैयाकरणा: वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति। वर्णानां प्रत्येकं वाचकत्वे द्वितीयादि वर्णोच्चा- रणान्नार्थक्यप्रसङ्गात्, आनर्थक्ये तु प्रत्येकमुत्पत्तिपक्षे यौगपद्येनोत्पत्यभावात्, अभिव्यक्तिपक्षे तु क्रमेणैवाभिव्यक्त्या समुदायाभावादेकस्मृत्युपारूढानां च वाचकत्वे सरो रस इत्यादावर्थप्रतीत्यविशेषप्रसङ्गात्, तदव्यतिरिक्त: स्फोटो नादाभित्यङ्ग्यो वाचको विस्तरेण वाक्यपदीये व्यवस्थापित:। स्फुटयते ध्वनिना अभिव्यज्यते इति कर्मव्युत्पत्त्या स्फुटत्यर्थोऽनेनेति करणव्युत्पत्या च घञन्त: स्फोटशब्दो निष्पद्यते।

महाभाष्ये 'सिद्धे शब्दार्थसम्बन्धे' इति सूत्रे कृते वार्तिके शब्दस्य नित्यत्वकथनेन स्फोटं कण्ठरवेणोक्तं कात्यायनाचार्येण स्फोटतत्त्वस्य विस्तृतं व्याख्यानं प्राप्यते वाक्यपदीये। वाक्यपदीयारम्भे एव स्फोट: शब्दब्रह्मरूपतया जगदुपादानतया उक्तम्—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यत:॥[१]**

अस्य स्फोटस्य उपाधिभेदादष्टौ भेदा: वर्णस्फोट:, पदस्फोट: वाक्यस्फोटश्चेति त्रय:, अत्रैव जातिव्यक्तिभेदेन वर्णजातिस्फोट:, पदजातिस्फोट: वाक्यजातिस्फोट: इति त्रय:। पदवाक्ययो: सखण्डाखण्डभेदात् सखण्डपदस्फोट: सखण्डवाक्यस्फोटश्चेति द्वौ। एवं संकलनयाष्टौ इति नागेशादय:।

**वेदान्तिन:**—स्फोटं प्रत्याख्याय वर्णानामेव वाचकत्वं स्वीकुर्वन्ति। तेषामभिप्रेतम् इदं वर्णानां वाचकत्वं निराकृत्य स्फोटस्य अनुभव: लोकै: यदा मन्यते तदा वयमपि स्फोटवादं प्रतिपादयाम:।

---

१. वाक्यपदीयम्, ब्रह्मकाण्डम्, कारिका ११

यथाक्रमानुरोधिन्यः पिपीलिकाः पंक्तिबुद्धिमारोहन्ति एवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति। अतो 'जरा' 'राजा' 'कपिः' 'पिक' इत्यादौ पदविशेषप्रतिपत्तौ नास्ति। वृद्धव्यवहारे च इमे वर्णाः क्रमाद्यनुगृहीता अर्थप्रत्यायकाश्च भवन्ति उच्चरितवर्णाः अर्थप्रत्याययिष्यन्ति इति वर्णवादिनः लघीयसी कल्पना। वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति। स स्फोटोऽर्थः व्यनक्तीति गरीयसी कल्पना स्यात् एवं कथयति शङ्कराचार्यः। अतो वर्णा एव वाचका नित्या विभवश्चेति।

**मीमांसकाः**—मीमांसानये शब्दः अर्थः तयोः सम्बन्धश्चापि नित्यः।[१] वैदिकवाक्यानाम् अर्थैः सह सम्बन्धः नित्यः यतो हि त्रिकालेऽपि अर्थमिमं न व्यभिचरति। यद्यपि लोके शब्दः स्वप्रामाण्यार्थं प्रत्यक्षम् अपेक्षते वैदिकवाक्यानि स्वतःप्रमाणभूतानि अपौरुषेयत्वात्।[२] शब्दार्थसम्बन्धे नित्ये अत एव शब्दोच्चारणात् अर्थबोधनं भवति। स एवायं गकारः एवं प्रत्यभिज्ञा भवति। केनापि नेदं वर्णितं यत् इमानि सन्ति शब्दोत्पत्तिकारणानि, न वा एवं रूपेण शब्दविनाशो भविष्यति। अतः शब्दविनाशे कारणस्यानुपलब्ध्या शब्दो नित्यः इति सिद्ध्यति।

**पातञ्जलयोगाः**—योगाचार्याः वर्णानां वाचकत्वं निराकृत्य पदस्फोटस्य च वाचकत्वं स्वीकुर्वन्तः। वर्णाः निरपेक्षरूपत्वेन अर्थप्रकाशने अशक्याः वर्णैर्नियतक्रमतयैव अर्थप्रत्ययः सम्भवः। यथा यागादि जन्यः अपूर्वः तत्तत् फलप्राप्तिपर्यन्तमेव समर्थः, न तदनन्तरः कल्पनागौरवापत्तेः, तथैव मीमांसकानां पूर्वपूर्ववर्णजनितसंस्कारसहितोऽपि वर्णः यदा क्रमरहितः तदा कदाचित् न अर्थप्रत्यायकः। तस्मात् वर्णेभ्यः असम्भवन्नर्थप्रत्ययः। यथा एकमपि मुखं मणिकृपाणदर्पणादयो विभिन्नवर्णपरिमाणमनेकं दर्शयन्ति तथैव एकः निर्भागः स्फोटः वर्णपदवाक्यभेदेन सभेद इव दृश्यते। अतो गकारभागमात्रस्यार्थः गोपदस्फोटसदृशः नभवितुमर्हति गकारस्तु स्वभागिनम् इत्योकारेण विशिष्टं अर्थं निर्धारयति।

मीमांसका वेदान्तिनः शब्दानां नित्यत्वं मन्यन्ते। तेषामयम् अभिप्रायः गौरित्यत्र वर्णा एव शब्दः। शब्दस्य अर्थः न शक्तिरूपः सम्बन्धः। स्फोटात्मकस्य शब्दस्य सत्ता न संभवति। वर्णातिरिक्तस्य बुद्धौ अतिप्रतिभासमानत्वेन तदाभावात्। ब्रह्मसूत्रे देवताधिकरणे स्फोटविषये चिन्तयन् श्रीमद्शङ्कराचार्यैः कथितम्—प्रजापतेरपि स्त्रष्टुः सृष्टेः पूर्वः वैदिकाः शब्दाः मनसि प्रादुर्बभूवुः पश्चात्तदनुगतानर्थान् ससर्जेति गम्यते तथा स च श्रुतिः। स भूरिति व्याहरत् स भूमिमसृजदित्यादि शब्दैः जगदुत्पत्तेः शब्दमूलकत्वं साधितम्। तत्र शब्दाभिप्रेतः स्फोटः एव। योगसूत्रभाष्येऽपि प्राप्यते यत् वर्णानामशक्यमिति पदस्यैव व्यञ्जितारो वर्णा इत्यभिहितम्। अत्र व्यञ्जितार इत्युक्त्वा पदस्फोटस्यैव सङ्केतः। मीमांसादर्शनेऽपि 'प्रागुक्तेन विभुत्वेन व्योमवाच्चास्य नित्यता इति कथनेनापि तस्य नित्यत्वविभुत्वे प्रतीयते। एवं एतन्मते वर्णस्फोटः स्वीक्रियते। स्फोटः नित्याकाश सदृशनित्यः। स्फोटं विहाय पदवाक्यकल्पनाखपुष्पमिव विद्यते।

---

१. मीमांसासूत्रम् १/१/५

२. वेदान्तसूत्रम् १/१/३

# ध्वनिखण्डनम्–महिमभट्टमते

डॉ॰ नागराज्. बी.

अखिलेऽस्मिन् साहित्यप्रपञ्चे सत्स्वपि नैकेषु अलङ्कारग्रन्थेषु, आनन्दवर्धनकृतः ध्वन्यालोकः मूर्धन्यस्थानं भजते। व्याकरणशास्त्रे पाणिनीयसूत्राणीव, वेदान्तशास्त्रे वेदान्तसूत्राणीव, साहित्ये सूत्रप्रायोऽयं ग्रन्थः ध्वन्यालोकः। अयं ध्वन्यालोकस्य प्रथमोद्योते "काव्यस्यात्मा ध्वनिरिति बुधैः" इत्यनेन ध्वनेः काव्यात्मत्वम् उक्त्वा "यत्रार्थः शब्दो वा" इत्यनेन ध्वनेः लक्षणं प्रतिपादयति। ग्रन्थोऽयमपि परवर्तिभिः आलङ्कारिकैः तत्तन्मतानुसारं खण्डितः। तेषु सर्वप्रथमतः भट्टनायकः। अयं "हृदयदर्पणः" इत्यस्मिन् ग्रन्थे ध्वनेः खण्डनं कृतवान्। द्वितीयः व्यक्तिविवेककारः महिमभट्टः। अनेन ग्रन्थेऽस्मिन् ध्वनेः खण्डनं कृत्वा अनुमाने अन्तर्भाव्यते।

आहत्य त्रिभिः विमर्शैः युक्तेऽस्मिन् ग्रन्थे प्रथमविमर्शे ध्वनिलक्षणाक्षेपः, द्वितीये शब्दौचित्यविचारः, तृतीये ध्वन्युदाहरणानाम् अनुमानान्तर्भावोपदर्शनं विहितम्।

प्रकृतं प्रथमे विमर्शे महिमभट्टः व्यञ्जनायाः खण्डनं कृत्वा तं व्यङ्ग्यम् अर्थम् अनुमाने एव अन्तर्भावयति। एतत्तु ग्रन्थस्य शीर्षकद्वारा एव प्रतीयते। अत्र "व्यक्तिः" नाम व्यञ्जनाव्यापारः। विषयममुं ग्रन्थस्य मङ्गलाचरणद्वारा एव उद्घाटयति। तद्यथा–

**अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्॥**[1] इति।

एतन्मतानुसारं शब्दस्य अभिधाव्यापारः एकैव। अनन्तरदशायाम् अनुमानद्वारा अनुमेयार्थः स्फुरति। इत्थं महिमभट्टमतानुसारम् अर्थस्तावत् द्विविधः, वाच्यः अनुमेयश्चेति। व्याङ्ग्यार्थ इति तथाकथितः अर्थः अनुमानद्वारा गम्य एव। न तु व्यञ्जनावृत्तिबोध्यः। ध्वन्यालोके तावत् ध्वनिलक्षणकारिका इत्थं निरूपिता–

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥**[2] इति।

लक्षणमिदं खण्डयित्वा स्वीयं लक्षणं कथयति महिमभट्टः। तद्यथा–

---

१. व्यक्तिविवेकः १.१

२. ध्वन्यालोकः १.१३

**वाक्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति।**
**सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता।।**[१]

इत्युक्तौ, यत्र वाच्यार्थो वा अनुमितार्थो वा कस्यचन सम्बन्धद्वारा अर्थान्तरं प्रकाशयति तत्र तस्य "काव्यानुमितिः" इति अभिधानम्।

महिमभट्टः विमर्शेऽस्मिन् ध्वनिकारेण उक्तं ध्वनिलक्षणं क्रमशः खण्डयति–

**१ अर्थः–**

ध्वनिकारेण उक्तरीत्या अर्थस्य उपसर्जनीकृतात्मत्वं सर्वथा असिद्धम्। यतो हि तस्य अर्थान्तरप्रतीत्यर्थमुपात्तस्य तद् व्यभिचाराभावात्। यथा अग्न्यादिसिद्धौ धूमः गुणतां न प्राप्नोति तथा अर्थस्य उपसर्जनीकृतात्मत्वं न सम्भवति।

**२. शब्दः–**

शब्दस्य स्वार्थाभिधानमन्तरेण व्यापारान्तरानुपपत्तेरुपपादयिष्यमाणत्वात् शब्दोऽपि अनुपादेय एव इति शब्दस्य उपसर्जनीकृतार्थत्वं खण्डयति। अतः शब्दः अर्थान्तरस्य द्योतनार्थं सर्वथा स्वीयम् अर्थं न उपसर्जनीकरोति। यदि उपसर्जनत्वं भवति तर्हि अनुकरणशब्देषु एव। यथा–

**तं कर्णमूलमागत्य फलितच्छद्मना जरा।**
**कैकेयीशङ्कयेवाह रामे श्रीर्न्यस्यतामिति।।**

इत्यादौ। तर्हि अर्थावगतिः कुतः? अनुकार्यात् इति चेत् तदपि न। यतो हि तस्य "सार्थकत्व"– "निरर्थकत्व" रूपेण द्वैविध्यात्।

सार्थकत्वं यथा–**"हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मित्"** इत्यादौ।

निरर्थकत्वं यथा–**"दात्यूहव्यूहकेलीकलितकुहकुहारावकान्ताः वनान्ताः"** इत्यादौ।

**३. उपसर्जनीभावः–**

ध्वनिलक्षणे उक्तरीत्या शब्दार्थयोः उपसर्जनीभावः अपि न सम्भवति। यतो हि यः यदर्थम् उपादीयते नासौ तमेव उपसर्जनीकरोति। यथा–उदकाद्युपादानार्थम् उपात्तो घटः न गुणतां प्राप्नोति। अपि च अविवक्षितवाच्यध्वनेः उदाहरणे–

**सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्।।**

---

१. व्यक्तिविवेकः १.२५

इत्यत्र व्यङ्ग्यव्यञ्जकभावः सर्वथा नास्तीति खण्डयति।

४. व्यङ्क्तः–

अत्र महिमभट्टः "सर्व एव हि शब्दो व्यवहारः साध्यसाधनभावगर्भतया प्रायेण अनुमानरूपोऽभ्युपगन्तव्यः" इति वदन् अत्र नितरां साध्यसाधनभावेन अनुमान एवेति "व्यङ्क्तः" इति खण्डयति।

महिमभट्टः पुनः अर्थनिरूपणविभागे अपि अमुमेव विषयं निरूपयति। तन्मतानुसारम् अर्थो वाच्यः अनुमेयश्चेति द्विविधः। तत्र शब्दव्यापारविषयो वाच्यः। स एव मुख्य उच्यते। यदाहुः–

**श्रुतिमात्रेण यत्रास्य तादर्थ्यमवसीयते।**
**तं मुख्यमर्थं मन्यते गौणं यत्नोपपादितम्॥** इति।

इत्थम् अर्थान्तरं वस्तुमात्रम्, अलङ्काररूपम्, रसादिः इति त्रिविधम्। वस्तुमात्रं तु वाच्यमपि भवति। अलङ्कारः रसादिश्च केवलमनुमानमेव। अपि च तत्र पदस्यार्थो वाच्य एव नानुमेयः, तस्य निरंशत्वात् साध्यसाधनभावाभावतः।

अपि च अयं साध्यसाधनभावः प्रमाणमूलः। तच्च प्रमाणं त्रिविधम्। यदाहुः–"लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम्।" तत्र लोकप्रसिद्धार्थस्य उदाहरणम्–

यथा–

**कयासि कामिन् सुरतापराधः पादानतः कोपनयावधूतः।**
**यस्याः करष्यिामि दृढानतापं प्रवालशय्याशरणं शरीरम्॥**

वेदमूलत्वं यथा–

**अयाचितारं न हि देवमद्रिः सुतां प्रतिग्राहयितुं शशाक।**
**अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्भतेऽर्थे॥**

अध्यात्ममूलं यथा–

**पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रि सुतासमागमोक्तः।**
**कमपरवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः॥**

अनन्तरं ध्वनिलक्षणे वियमानान् दशदोषान् निरूपयितुम् उपक्रमते। यथा–

**अर्थस्य विशिष्टत्वं शब्दः सविशेषणस्तदः पुंस्त्वम्।**
**द्विवचनवाशब्दौ च, व्यक्तिर्ध्वनिर्नाम, काव्यवैशिष्ट्यम्॥**[1]

१. व्यक्तिविवेकः १.२३

**वचनं च कथनकर्तुः, कथिता ध्वनिलक्ष्मणीति दशदोषाः।**
**येत्वन्ये तद्भेदप्रभेदलक्षणगता न ते गणिताः।।**[१] इति।

अत्र अर्थस्य विशेषणं, शब्दः, शब्दस्य विशेषणं, "तम्" इत्यत्र तत् शब्दस्य पुंसिप्रयोगः, व्यङ्क्तः इत्यत्र द्विवचनं, "वा" शब्दः, व्यक्तिः (व्यञ्जना), ध्वनिः, इति नाम, काव्यविशेषः इत्यत्र विशेषशब्दस्य प्रयोगः, सूरिभिः कथितः इत्यत्र कर्तुः शब्देन उल्लेखः इत्येतां दशदोषान् उद्घाटयति महिमभट्टः।

एवं च स्वीयं काव्यलक्षणम् उपस्थापयति। यथा-

**तस्मात् स्फुटतया यत्र प्राधान्येनान्यथापि वा।**
**वाच्यशक्त्यानुमेयोऽर्थो भाति तत् काव्यमुच्यते।।** इति।[२]

अतः यत्र प्राधान्येन, अप्राधान्येन वा वाच्येन स्फुटतया (स्पष्टतया) अनुमेयार्थः भाति तत्र तत् काव्यम् इत्युच्यते। अपि च-

**पक्षधर्मत्वसम्बन्धव्याप्तिसिद्धिव्यपेक्षणात्।**
**वृक्षत्वाम्रत्वयोर्यद्वद् यद्वच्चानलधूमयोः।।**[३]

**अनुमानत्वमेवात्र युक्तं तल्लक्षणान्वयात्।**
**असतश्चेन्द्रचापादेः का व्यक्तिः कृतिरेव सा।।**[४]

अत्र अनुमानस्य अङ्गद्वयं, पक्षधर्मता तथा व्याप्तिः। यथा धूमः, अग्निः इत्यादि व्याप्तेः साध्यस्य सिद्धिर्भवति, अतः पूर्ववत् अत्रापि अनुमानं निर्बाधम्। अपि च-

**न च युक्तिनिराशंसा ततः कश्चित् प्रवर्तते।**
**निवर्तते वेत्यस्येष्टा साध्यसाधनगर्भता।।**[५]

इति कथयति।

इत्थम् एकस्य शब्दस्य अर्थान्तराणां सत्त्वे तान् अर्थान्तरान् अनुमानमेव बोधयतीति महिमभट्टस्य मतम्।

एवं सुप्रसिद्धं ध्वन्यालोकं स्वीययुक्तिप्रदर्शनद्वारा सलक्षणं धैर्येण खण्डयति। परन्तु अनुयायिनां साहित्ये सम्प्रदायोऽयं न प्राथितः।

१. व्यक्तिविवेकः १.२४
२. व्यक्तिविवेकः १.३२
३. व्यक्तिविवेकः १.३४
४. व्यक्तिविवेकः १.३५
५. व्यक्तिविवेकः १.३८

# साधारणीकरणम्

श्रीकुन्दनकुमारः

रसनिष्पत्तिसन्दर्भे साधारणीकरणं विशिष्टमेव महत्त्वं भजते। साधारणीकरणस्य आविष्कर्ता भट्टनायक अस्ति यद्यपि अस्य मूलबीजं नाट्यशास्त्रेऽपि प्राप्यते। अनेन काव्यास्वादस्य महत्त्वपूर्णप्रश्नस्य मनोवैज्ञानिकसमाधानं प्रस्तूयते। व्याकरणदृष्ट्या 'साधारण + च्वि + करण' संयोगात् साधारणीकरणं निष्पद्यते यस्यार्थः असाधारणं साधारणकरणाय क्रियाविशेषः। काव्यशास्त्रे साधारणीकरणस्य विशिष्टं महत्त्वं वर्तते यस्यानुसारं काव्ये वर्णितदुष्यन्तादिपात्राणां भावः केन प्रकारेण सर्वसाधारणद्वारा ग्राह्यः भवति इत्येव निरूप्यते। अर्थात् काव्यानुशीलनकाले नाट्यप्रेक्षणकाले वा सहृदयसामाजिकेभ्यः कविनिबद्धभावानामनुभूतेः प्रक्रियाज्ञानं साधारणीकरणेनैव जायते।

भरतस्यानुसारं यदा एतेषां भावानां सामान्यरूपेण प्रस्तुतीकरणं भवति तदा रसनिष्पत्तिर्जायते-

**'एभ्यश्च सामान्यगुणयोगेन रसो निष्पद्यते'**[1]

परन्तु साधारणीकरणस्योल्लेखः निश्चितरूपेण भट्टनायकस्योद्धरणेष्वेव प्रथमतया प्राप्यते। यथाहि-

'तस्मात्काव्ये दोषभावगुणालङ्कारमयत्वलक्षणेन नाट्ये चतुर्विधाभिनयरूपेण निविडनिजमोह-संकटकारिणा विभावादिसाधारणीकरणात्मनाऽभिधातो द्वितीयांशेन भावकत्वव्यापारेण भाव्यमानो रसोऽनुभवस्मृत्यादिविलक्षणेन रजस्तमोऽनुवेधवैचित्र्यबलादद्रुतिविस्तारविकासलक्षणेन सत्वोद्रेकप्रकाशानन्द-मयनिजसंविद्विश्रान्तिलक्षणेन परब्रह्मास्वादविधेन भोगेन परं भुज्यते .........।'[2]

भट्टनायकस्य साधारणीकरणस्य लक्षणस्य विश्लेषणेन निम्नलिखिततथ्यं प्राप्यते-

(क) विभावादीनां निविडनिजत्वमोहात् मुक्तिरेव साधारणीकरणम्।

(ख) साधारणीकरणं वस्तुतः भावकत्वव्यापारस्य प्राणः वर्तते। अर्थात् काव्ये वर्णितसीतारामादयः स्वकीयं व्यक्तित्वं परित्यज्य सामान्यस्त्रीपुरुषरूपेण उपस्थिताः भवन्ति।

(ग) स्थायिसञ्चारिविभावानुभावादीनां सर्वेषां साधारणीकरणम् भवति।

(घ) भावकत्वव्यापारेण भाव्यमानस्थायिभावस्य परिणतिः रसरूपेण भवति। विभावादीनां साधारणीकरणं पूर्वं भवति स्थायिनां चान्तरम्।

---

१. ना. शा., काव्यमाला, पृ. १०६

२. अभि. भा., भाग-१, पृ. २७७

(ङ) साधारणीकरणं रसास्वादात् पूर्वक्रिया वर्तते। एषा सैव प्रक्रिया या रसस्य विभिन्नान् अवयवान् स्व-स्ववैशिष्टेभ्यो मुक्तं कृत्वा आस्वाद्यरूपेण प्रस्तुतं करोति।

अभिनवगुप्तः भट्टनायकस्य मते संशोधनं कृत्वा साधारणीकरणस्य प्रसङ्गं पृथग्रूपेण प्रस्तौति-

'वाक्यार्थप्रतिपत्तेरनन्तरं मानसी साक्षात्कारात्मिकाऽपहसिततत्तद्वाक्योपात्तकालादिविभागान्तावत्प्रतीतिरुपजायते। तस्यां च यो मृगपोतकादिर्भाति तस्य विशेषरूपत्वाभावाद् भीत इति त्रासकस्यापारमार्थिकत्वाद् भयमेव परं देशकालाद्यालिङ्गितम्। तत् एव 'भीतोऽहं' भीतोऽयं शत्रुर्वयस्यो मध्यस्थो वा इत्यादि प्रत्ययेभ्यो दुःखसुखादिकृतबुद्ध्यन्तरोदयनियमवत्तया विघ्नबहुलेभ्यो विलक्षणं निर्विघ्नप्रतीतिग्राह्यं साक्षादिव हृदये निविशमानं चक्षुषोरिव विपरिवर्तमानं भयानको रसः। तथाविधे हि भये नात्माऽत्यन्ततिरस्कृतो न विशेषत उल्लिखितः।'[१]

**अभिनवगुप्तस्य मतस्य वैशिष्ट्यम्-**

(क) साधारणीकरणं न केवलं विभावादेः अपितु स्थायिभावस्यापि भवति। यथा विभावादयः स्थायिभावस्य कारणानि भवन्ति तथैव विभावादेः साधारणीकरणमपि स्थायिभावस्य साधारणीकरणस्य करणं भवति।

(ख) स्थायिभावस्य साधारणीकरणस्य तात्पर्यं वर्तते-देशकालादिबन्धनान्मुक्तिः। अस्यां परिस्थितौ व्यक्तिगतसंसर्गः तिरोहितो भवति तथा सुखदुःखयोः भौतिकचेतना नश्यति।

(ग) कलाक्षेत्रे भावस्य साधारणीकरणं वैयक्तिकं नापितु सामूहिकक्रिया वर्तते। केवलं एकस्य प्रमातुरेव भावः मुक्तः न भवति अपितु समस्तसामाजिकः एकाग्रचित्तो भूत्वा मुक्तभावस्य सामूहिकरूपेणानुभवति। परिणामतः साधारणीकरणस्य मूलं स्थायिभावस्यैव साधारणीकरणम्।

(घ) अभिनवः साधारणीकरणस्य स्तरद्वयं स्वीकरोति-एकस्यां स्थितौ विभावादेः विशेषसम्बन्धस्य तिरोधानं पुनश्चापरस्यां स्थितौ सामाजिकस्य व्यक्तित्वबन्धननाशः। अस्याभिप्रायो यत् विभावादिभिः सह स्थायिभावस्य साधारणीकरणेन सामाजिकस्यानुभूतेः साधारणीकरणं भवति। अभिनवः वासनारूपेण स्थायिभावस्य स्थितिं मत्वा तस्य साधारणीकरणमङ्गीकरोति।

(ङ) स्थायिभावस्य साधारणीकरणं मत्वैव सम्बन्धानां परिहारः संभव अस्ति। अतस्तेन कवेः समस्तव्यापारस्य साधारणीकरणं स्वीकृतम्। अर्थात् साधारणीकरणभूतः सहृदयः प्रथमतया कवेः सह तादात्म्यं संस्थाप्य प्रकारान्तरेण नायकेन सह तादात्म्यं संस्थापयति।

१. अभि. भा., भाग-१, पृ. २७९

धनञ्जयः साधारणीकरणशब्दस्यार्थे प्रकारान्तरेण 'परित्यक्तविशेष' इति शब्दस्य प्रयोगं करोति। तन्मतानुसारं काव्येषु वर्णितरामादयः स्वविशेषव्यक्तित्वस्य परित्यागं कृत्वा साधारणपुरुषरूपेण उपस्थितो भवति।

**धीरोदात्ताद्यवस्थानां रामादिः प्रतिपादकः।**
**विभावयति रत्यादीन् स्वदन्ते रसिकस्य ते॥**
**ता एव च परित्यक्तविशेषा रसहेतवः।**[१]

धनञ्जस्य मतानुसारम् अभिनयकाले नर्तकस्यापि रसास्वादनं भवति–

**'काव्यार्थभावनास्वादो नर्तकस्य न वार्यते'**[२]

रसोत्पत्तिसम्बन्धे सः शङ्कुकस्यैव मतं समर्थयति। यथा शिशुः मृण्मयाश्वादीनि क्रीडनकानि वास्तविकं मत्वा तैर्साकं क्रीडति तथैव प्रेक्षकोऽपि अवास्तविकार्जुनादीन् नटानेव वास्तविकं मत्वा आनन्दं प्राप्नोति, अभिनेतृणामुत्साहेन स्वयमपि आनन्दितो भवति–

**क्रीडतां मृण्मयैर्यद्वद् बालानां द्विरदाभिः।**
**सोत्साहः स्वदते तद्वच्छ्रोतृणामर्जुनादिभिः॥**[३]

रसः रसिकसहृदयेष्वेव भवति, न तु अनुकार्ये। तस्यानुभूतिः अनुकार्यरामसीतादीनां न भवति अपितु रसिकदर्शकसामाजिकानां भवति–

**रसः स एव स्वाद्यत्वाद्रसिकस्यैव वर्तनात्।**
**नानुकार्यस्य वृत्तत्वात्काव्यस्यातत्परत्वतः॥**
**द्रष्टुः प्रतीतिव्रीडेर्ष्यारागद्वेषप्रसङ्गतः।**
**लौकिकस्य स्वरमणीसंयुक्तस्येव दर्शनात्॥**[४]

**धनञ्जयस्य मतानुसारं रसास्वादं यावत् गन्तुं सोपानद्वयमस्ति–**

(१) काव्यगतरामादिपात्राणि धीरोदात्तादिनायकानामवस्थायाः द्योतकानि भवन्ति– ''धीरोदात्ताद्यवस्थानां रामादिप्रतिपादकाः।''. अस्य तात्पर्यं यत् अनुकार्यः वास्तविक–

---

१. दश. ४.४०, ४१

२. दश. ४.४२

३. दश. ४.४१

४. दश. ४.३८,३९

रूपेण कथमपि स्यात् काव्यनाटकयोः सः कवेः परिकल्पनानुसारं धीरोदात्तादिषु कस्याप्येकस्यावस्थायाः द्योतनं करोति न तु स्वमूलावस्थायाः।

अस्य व्याख्यां कुर्वन् वृत्तिकारः धनिको लिखति-

'न हि कवयो योगिन इव ध्यानचक्षुषा ध्यात्वा प्रातिस्विकीं रामादीनामवस्थामिति-हासवदुपनिबध्नन्ति। किं तर्हि? सर्वलोकसाधारणाः स्वोत्प्रेक्षाकृतसन्निधीः धीरोदात्ताद्यवस्थाः क्वचिदाश्रयमात्रदायिनी विदधति।'[१]

(2) यदा एताषामवस्थानां विशेषभावः परित्यज्यते तदा एते सामाजिकानां रसास्वादस्य कारणं भवति-'ता एव परित्यक्तविशेषा रसहेतवः।' अस्य तात्पर्यं यत् यदा काव्यगतपात्राणि स्वविशेषव्यक्तित्वं रामत्वादिकं विहाय सामान्यामानवमात्रः भवति तदा एते सहृदयानां रसास्वादनस्य कारणं भवति नो चेत् न भवति। अधुना सीतारामादयः ऐतिहासिकाः न अपितु साधारणनरनारीमात्राः भवन्ति-'तत्र सीतादिशब्दाः परित्यक्तजनकतनयादिविशेषाः स्त्रीमात्रवाचिनः।' वस्तुतः भट्टनायकस्यापि एष एव साधारणीकरणसिद्धान्तः।

आचार्यमम्मटः साधारणीकरणसम्बन्धे अभिनवगुप्तस्यैव मतं समर्थयति। अस्य टीकाकार-गोविन्दठाकुरस्यानुसारं भावकत्वं साधारणीकरणमुच्यते येन विभावस्थायिभावानां साधारणीकरणं भवति। अस्यां परिस्थितौ सीतादिस्त्री अभिनेत्री कामिनीरूपेण गृह्यते। स्थाय्यनुभावादीनां च साधारणीकरणं सम्बन्धविशेषबन्धनान्मुक्तिः।

**'भावकत्वं साधारणीकरणम्। तेन हि व्यापारेण विभावादयः स्थायी च साधारणीक्रियन्ते। साधारणीकरणञ्चैतदेव यत् सीतादीनां कामिनीत्वादि सामान्येनोपस्थितिः। स्थाय्यनुभावादीनां च सम्बन्धिविशेषानवच्छिन्नत्वेन।'**[२]

अस्य मतानुसारं विभाव-(आलम्बनं, उद्दीपनं, आश्रयश्च) अनुभाव-स्थायि- सञ्चारीनां सर्वेषां साधारणीकरणं भवति।

आचार्यविश्वनाथः स्थायिविभावादीनां साधारणीकरणं मन्यते। तस्य मतानुसारमस्य विशेषसम्बन्धस्य परिहारः न भवति यत् एते विभावादयः मम नास्ति अन्यस्य अस्ति अथवा अन्यस्य नास्ति-

---

१. दश. ४.४० वृत्ति

२. प्रदीपोद्योत्, पृ. ९५

साधारण्येन रत्यादिरपि तद्वत्प्रतीयते।

**परस्य न परस्येति ममेति न ममेति च।**
**तदास्वादे विभावादेः परिच्छेदो न विद्यते।।[१]**

शृङ्गारादिरसानां रत्यादिस्थायिभावस्य काव्ये नाटके वा सामान्यरूपेण प्रतीतिर्भवति। एतदेव साधारणीकरणं विभावादेः विभावनव्यापार उच्यते। अस्यैव प्रभावेन तस्मिन् समये प्रमाता (द्रष्टा श्रोता वा) आत्मानं समुद्रलङ्घनकर्तुः हनुमानादेः अभिन्नं मन्यते। यद्यपि समुद्रलङ्घनं मनुष्यानां कृते संभवः नास्ति, तथापि हनुमतादिभिः सह अभेदस्थापनेन सामाजिकानां चित्ते तादृश एवोत्साहः उत्पद्यते। विश्वनाथः साधारणीकरणस्य कारणेनैव प्रमात्रा सह आश्रयस्य तादात्म्यं वर्णयति। विश्वनाथः विभावानां साधारणीकरणं मन्यते तथा तेनैव सह पाठकस्य दर्शकस्य वा आश्रयेण सह तादात्म्यं स्वीकरोति-

**व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः।**
**तत्प्रभावेण यस्यासन् पाथोधिप्लवनादयः।**
**प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते।।[२]**

ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोध इत्युच्यते-

**उत्साहादिसमुद्बोधः साधारण्याभिमानतः।**
**नृणामपि समुद्रादिलङ्घनादौ न दुष्यति।।[३]**

विश्वनाथः विभावादेः साधारणीकरणं स्वीकरोति एव तेनैव सह स्थायिभावस्यापि साधारणीकरणं स्वीकरोति। तन्मतानुसारं प्रमात्रा सह नायकस्य अभेदत्वं वर्तते। प्रमाता न तु विभावादेः सम्बन्धं स्वीकरोति नैव जहाति।

पण्डितराजजगन्नाथः साधारणीकरणसम्बन्धे स्वकीयं मौलिकं चिन्तनं प्रस्तौति। सः सामान्यरूपेण साधारणीकरणमस्वीकृत्य कस्यापि दोषस्य कल्पनां विधाय तेनैव प्रमातुः आत्मनि दुष्यन्तेन सहाभेदं स्थापयति। प्रमातुः आत्मा कल्पितदुष्यन्तत्वेनाच्छादितो जायते तथा स आत्मानं दुष्यन्तोऽस्मीति बोधते। तदा स आत्मानं शकुन्तलायाः प्रेमी अपि मन्यते। तेन दोषकारणेन कल्पितदुष्यन्तत्वाच्छन्नात्मनि कल्पितशकुन्तलाविषयकरतिरपि अवभासते यथा दूरत्वादिदोषकारणेन अज्ञानावृतः शुक्तिः वास्तविकरूपम् अप्रदर्श्य रजतखण्डरूपेण प्रतीयते। यद्यपि आत्मनि शकुन्तलादेः रतिः वास्तविकरूपेण न भवति नैव शुक्तिखण्डे रजतत्वं तथापि साक्षी आत्मा तस्य बोधं तु कारयत्येव-

---

१. सा. द. ३.११,१२

२. सा. द. ३.९

३. सा. द. ३.१०

**'काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषु व्यञ्जनाव्यापारेण दुष्यन्तादौ शकुन्तलादिरतौ गृहीतायामनन्तरं च सहृदयतोल्लसितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना, कल्पितदुष्यन्तत्वावच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभावस्य शकुन्तलादिविषयकरत्यादिरेव रसः।'**[1]

अस्मिन्नेव क्रमे प्राचीनकाव्याचार्याणां मतममान्यमुद्घोष्य पण्डितराजः कथयति-यद्यपि विभावादेः साधारणीकरणस्य कथनं प्राचीनाचार्याणामस्ति, तथापि तस्य कस्यापि दोषकल्पनां विना सिद्धिः कठिनास्ति। यतोहि, काव्ये शकुन्तलादिबोधकशब्दैः पुनः कान्तादिरूपेण बोधः कथं संभवः? अर्थात् काव्ये शकुन्तलादिवर्णनेन तस्य ज्ञानं शकुन्तलादिरूपेणैव भवति, न तु स्त्रीमात्ररूपेण एव-

**'यद्यपि विभावादीनां साधारण्यं प्राचीनैरुक्तं तदपि काव्येन शकुन्तलादिशब्दैः शकुन्तलत्वादिबोधजनकैः प्रतिपाद्यमानेषु शकुन्तलादिषु दोषविशेषकल्पनं विना दुरुपपादम्।'**[2]

पण्डितराजस्य पश्चात् संस्कृतकाव्यशास्त्रे मौलिकचिन्तनपरम्परा अवरूद्धा इव सञ्जाता। आधुनिकभारतीयभाषायां साधारणीकरणविषये चिन्तनं प्रायशः नोपलभ्यते। हिन्दीभाषायाम् आचार्यरामचन्द्रशुक्ल-आचार्यनन्ददुलारेवाजपेयी-पण्डितकेशवप्रसादमिश्र-डा. श्यामसुन्दरदास-डा. गुलाबराय-डा. नगेन्द्रप्रभृतयः काव्यशास्त्रविद्वांसः चिन्तनपरम्परां पर्यपोषयन्। परन्तु कस्यापि मतं सर्वमान्यं न प्रतिभाति। निष्कर्षतया वक्तुं शक्यते यत्-

१. कविकृतासाधारणभावपदार्थस्य (विशेषस्य) साधारणरूपेण (सामान्यरूपेण) दर्शकैः श्रोतृभिः वा ग्रहणं साधारणीकरणव्यापारः वर्तते।

२. काव्यनाटकयोः साधारणीकरणं विभावादेः सम्मिश्रितक्रियाणां समस्तघटनानाञ्च भवति।

३. अनेन व्यापारेण सहृदयः स्वसमग्रस्तपूर्वाग्रहैः विमुच्यते।

४. साधारणीकरणं रसास्वादे महत्त्वपूर्णभूमिकायाः कार्यं करोति।

५. साधारणीकरणस्याधारेण सहृदयस्य स्थायिभावः सहृदयनिष्ठो भूत्वा विभावादेः संयोगं प्राप्य रसरूपेणाभिव्यक्तो भवति।

६. रसात्मकतायाः मध्यमकोटिः नैव स्वीकार्या।

७. साधारणीकरणावस्थायां देशकालादिबन्धनादि विच्छिन्नानि जायन्ते।

---

१. र. ग., प्र. आ., पृ. १०५
२. र. ग., प्र. आ., पृ. १०५

# कालिदासस्यातङ्कविरोधिनी दृष्टिः

डॉ॰ रामसुमेरयादवः

विविधैः रूपैर्व्याख्यायितं सृष्टावस्यां मानवजीवनम्। मानवः ब्रह्मणः श्रेष्ठतमा रचना वर्तते। अपेक्षते मानवः स्वकर्मभिः सृष्टिरूपिणमुपधानं सुरूच्या सुरम्यतया चानुशासयेत्। देवदुर्लभमानवतनमवाप्य समस्तबन्धनैः मुक्तो भूत्वा जीवेत्। प्रदत्तानुन्तरदायित्वान् जनः सुचारूपेण निर्वहेत्। ततस्तु तज्जनस्योपरि निर्भरः स्यात्। चेत् कोऽपि स्वकृतदुष्कर्मभिः विश्ववसुन्धरायामव्यवस्थामुत्पादयति तन्तु सुकरं न स्यात्। हिंसा कथं भवति? किं मूलमस्याः? हिंसारहितस्य समाजस्य स्थापनार्थं कस्य तत्त्वस्यावश्यकता वरीवर्तते इत्यादिप्रश्नानामुत्तराणि भारतीयसंस्कृतौ विविधरूपेषूलभ्यन्ते। छान्दोग्योपनिषदि हिंसारहितसमाजस्य परिकल्पना दरीदृश्यते। आतङ्कवादत्वात् हिंसानां बाहुल्यं नित्यशः नवरूपेष्ववलोक्यते।

महाकविकालिदासप्रणीतेष्वखिलेषु काव्येषु नाटकेषु च आतङ्कवादस्य विरोधे तस्य कुशाग्रदृष्टिः स्पष्टतया परिलक्ष्यते। सृष्टिरनन्ता च सततशीला। सृष्टावस्यां सुखदुःखयोः, शान्तशान्त्योः आपत्तिसंदत्योः निरन्तरं प्रादुर्भावः भवन्नस्ति। प्रत्येको युगः समेषामेषां द्रष्टारूपेण वरीवर्ति। कालचक्रानुसारेण परिस्थिति-परिवर्तनं निरन्तरं भवन्नस्ति। परन्तु काञ्चनापदं मानवं वञ्चयन्ति सुखेभ्यः। स्थितावस्यां यो कविः युगद्रष्टा भवति सः कालसीम्नि अवद्ध्वैव सर्वेषु कालेषु सत्यं शिवं सुन्दरमित्यस्य प्रतिष्ठापकरूपेण साहित्यं रचयति।

सन्दर्भेऽस्मिन् कालिदासस्य दूरदृष्टिः, आनन्दसन्दोहसम्पन्नं साहित्यसंसारं सदा सर्वदा सक्षमा सशक्ता च स्थास्यति। कालिदासः भोग-शृङ्गार-वैभव-विलास-प्रकृति प्रेम-सौन्दर्यादीनामेव कविर्नास्ति अपितु एवं तु तस्य काव्यस्य शारीरिकसौष्ठवमस्ति। तस्यान्तस् नास्ति। केवलमिदं कल्पनानां मन्दाकिन्याः अमन्दप्रवाहः, तस्य मूलप्रेरणा नास्ति। इदं तु केवल वाह्यसौन्दर्यं वर्तते। आन्तरिकी तुष्टिः नास्ति। चेन्नायिकानां शृङ्गारिकं नखशिखवर्णनम् अभीष्टमभविष्यत् तदा जगतः कोऽपि मन्दबुद्धिरपि तं कनिष्ठिकाधिष्ठिमिति संज्ञया नाकथयिष्यत्।

**पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।**
**अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥**

चेदद्य कालिदासस्याजरत्वम् अमरत्वं च मुखरितं भवन्नस्ति। तदा तेन सृजितयुगस्य चेतना राष्ट्रियतायाः स्वरेषु गुञ्जायमानस्य राष्ट्रस्य सुरक्षासाधनं प्रति श्रेयोधिगच्छति। प्रतीयते कालिदासेन विश्वकल्याणार्थमेव काव्यसर्जनं न विहितमपित्वाराधना विहिता। कालिदासः सदैवातङ्कस्य विरोधी भूत्वा तस्योन्मूलने शक्त्या क्रियाशीलो प्रतिभाति। सृष्टौ, आदित एवातङ्कस्य संस्कारविहीनाः विडम्बनाः वातावरणं निर्माणं विदधत्यः समायान्त्यः सन्ति। हलायुधकोशानुसारेण आतङ्कशब्दस्य व्युत्पत्तिः आङ्+तकि+घञ् इत्यनेन निष्पद्यते। यस्यार्थः रोगः, सन्तापः, सन्देहः, मुरजशब्दः भ्रमश्च भवति। वाचस्पत्यम् इति कोशानुसारेण रोगः, सन्तापः, सन्देहः, मुरजशब्दः, भयश्चेति पञ्चार्थाः स्वीकृताः।

एषु मुख्यरूपेणातङ्कशब्दः भयार्थे रूढत्वं गतः। अस्याः भयरहितायाः स्थितेरसितत्वं सुव्यवस्थितां नैतिकीं व्यवस्थामनुसरति समाजे यदा व्यवस्थायाः साम्राज्यं भवति। तदा कथञ्चित् भयं न दरीदृश्यते। यदा समाजे मनागपि प्रमादः भवति तदा आतङ्कस्य स्थितिरुत्पद्यते। अनन्तरं सामाजिक-भौतिक-धार्मिक-राजनीतिक-व्यवस्थानामाधारस्तम्भाः जर्जरिताः भवन्ति। कथितुं शक्यते यत् व्यवस्थायामियमवस्थायाः आक्रमणेनेव आतङ्क कथ्यते। किं नाम व्यवस्था शास्त्रप्रतिपादितानीतिरेव व्यवस्था।

महाकविकालिदासस्य समस्तकाव्यानां नायकाः सर्वत्र नित्यशः आतङ्कविरोधिनः तत्पराः सन्नद्धाश्च प्रतीयन्ते। प्रथमं कालिदासस्य नवनवोन्मेषशालिन्यः प्रतिभायाः प्रकृष्टो प्रसादः रघुवंशमहाकाव्यं प्रशंसनीयम्। तत्र नन्दिन्याः रक्षायाः मार्गे आगतः सिंहः आतङ्कस्यैव पर्यायोऽस्ति। येन राजानं दिलीपं स्वसमक्षे पराजयं स्वीकर्तुमसंख्यकानि प्रलोभनानि प्रदत्तानि।

**भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमति त्वदन्ते।**
**जीवनन्पुनः शश्वदुपटलवेभ्यः प्रजां प्रजानाथ पितेव पासि।।**[१]

सिंहस्य अग्रे कया हरति-यदि तु भवान् गुरूभ्यः विभेति तदा अन्याः स्वस्थाः गाः प्रदाय तं प्रसन्नं कर्तुं शक्नोति।

**अथैकधेनोपराधचण्डाद् गुरोः कृशानु प्रतिमाद्विभेषि।**
**शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोघ्नीः।।**[२]

परन्तु राजा दिलीपः तत्समक्षे क्षत्रियशब्दस्यार्थं निरूपयन् पराजयं कदापि नाङ्गीकरोति।

**क्षत्रात्किल त्रायत इत्युदग्रः, क्षत्रस्य शब्दो भुवनेषु रूढः।**
**राज्येन किं तद्विपरीतवृत्ते प्राणैरूपक्रोशमलीमसैर्वा।।**[३]

---

१. रघु० २-४८
२. रघु० २-४९
३. रघु० २-५३

राजा दिलीप: स्वकर्तव्यं पालयितुं, नन्दिन्या: रक्षायै आत्मानं सिंहस्य भक्षणार्थं प्रस्तौति।

**तथेति गामुक्तवते दिलीप:, सद्य: प्रतिष्टम्भविमुक्त बाहु:।**
**स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य।।**[१]

महाकवे: कालिदासस्य नायकानां स्वाभाविकी प्रवृत्तिरातङ्कं समूलं समाप्तुमस्ति। एतदर्थं ते प्राणोत्सर्गाय सुसन्नद्धा: दृश्यन्ते—

**सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवन्त:।**
**न पारणा स्याद्विहिता तवेयं भवेदलुप्तश्च मुने: क्रियार्थ:।।**[२]

अत्र गो शब्द: आतङ्केनाक्रान्त: प्रजाया: प्रतीकरूपेण प्रतिभाति। स्वयं राजा दिलीप: आतङ्कात् मुक्तिप्रयासस्य प्रतीक:। अस्मात् श्रेष्ठतर: दृष्टान्त: किं भवितुमर्हति। महाकाव्येऽस्मिन् आतङ्कवादिप्रवृत्ते: विपरीतामुपाययोजनामवलोकनार्थं केचनोदाहरणा: प्रस्तूयन्ते।

**यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।**
**यथापराधदण्डानां यथाकालप्रवोधिनाम्।।**[३]

तेनानुसारेणापराधिनं दण्डं प्रदायैव राज्यस्य स्थैर्यं भवितुमर्हति।

**स्थित्यै दण्डयतो दण्ड्यान्परिणेतु: प्रसूतये।**
**अप्यर्थकामौ तस्यास्तां धर्म एष मनीषिण:।।**[४]

राजा दिलीप: अथर्ववेदस्य रक्षकस्य वशिष्ठस्यादरं विदधन् व्याहरति भवतामनुकम्पया राज्ये राजा-मन्त्री-मित्र--राजकोष-राज्य-दुर्ग-सेनादीनां पूर्णतया विद्यते। अग्नि-जल-अकालमृत्यु-इत्यादीनां दैवीविपत्तीनां, शत्रूणां, चौराणां वञ्चकादीनां, मानवविहितापत्तीनां किञ्चित् भयं नास्ति।

**पुरुषायुषजीविन्यो निरातङ्का: निरीतय:।**
**यन्मदीया: प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम्।।**[५]

अर्थात् भवतामेव ब्रह्मतेजस: बलमस्ति येन मदीयायां प्रजायां कोऽपि शतवर्षेभ्य: न्यूनायु: न प्राप्नोति। न हि कस्यचित् कृते ईतीनां तथा च विपत्तीनां भयं वर्तते।

---

१. रघु० २–५९
२. रघु० २–५५
३. रघु० १–६
४. रघु० १–२५
५. रघु० १–६३

एभिरुद्धरणैः महाकविः निरूपयति यत् आतङ्कस्य विराधे दण्डः रघुवंशिनां कृते धर्मरूपेण समायाति। देवाधिदेवः शतक्रतुरपि देवता अस्ति। तथापि सः यदाश्वमेधयज्ञस्याश्वं याति। तदा सः आतङ्कवादीरूपेण दृष्टिगोचरो भवति।

**उद्यतैकभुजयष्टिमायतीं श्रोणिलम्बिपुरुषान्त्रमेखलाम्।**
**तां विलोक्य वनितावधे घृणां पत्रिणा सह मुमोच राघवः।।[१]**

महाकवेः दृष्टौ आतङ्कवादी केवलमातङ्कवादी भवति। तस्मै कथञ्चित् आदरः अदेयः। रामः लङ्केश्वरात् रावणात् मुक्तिं प्रदाय वसुन्धरायां स्वकर्तव्यान् निर्वहति।

**तेन मन्त्रप्रयुक्तेन निमेषार्धादयातयत्।**
**स रावणशिरः पङ्क्तिमज्ञातव्रणवेदनाम्।।[२]**

लवणासुरस्यातङ्कात् मुक्तिं प्रदायैव शत्रुघ्नः आत्मसन्तुष्टिं प्राप्नोति। सः मेघनादं हन्तुः तेजस्विनः लक्ष्मणस्य भ्राता अस्ति। अर्थात् रघुवंशिनः प्रजाभ्यः सुखं शान्तिञ्च प्रदातुं तथा चातङ्कात् मुक्तिं प्राप्तये तत्पराः दृश्यन्ते।

**स हत्वा लवणं वीरस्तदा मेने महौजसः।**
**भ्रातुः सौदर्भमात्यानमिन्द्रजिद्विधशोभिनः।।[३]**

महतः आतङ्कवादिनः तारकासुरस्य भयङ्करोत्पातैः मुक्तिं प्रदातुं कुमारकार्तिकेयस्य जन्मैव कुमारसम्भवमित्यस्य महाकाव्यस्य रचनायाः लक्ष्यमासीत्।

**प्रसन्नचेता मदनान्तकारः स तारकारेर्जयिनो भवाय।**
**शक्रस्य सेनाधिपतेर्जयाय, व्यचिन्तयच्चेतसि भाविकिञ्चित्।।[४]**

आतङ्कस्य प्रतिमूर्तिना तारकासुरेण देवा अपि भयाक्रान्ताः वर्तन्ते। येनाशेषाः व्यवस्थाः छिन्नीकृताः। तमेवातङ्किनं तारकासुरं संहर्तुं कुमारकार्तिकेयः जन्मगृहीत्वा शान्तिं स्थापयति। अनन्तरम् इन्द्रं तस्य स्वामित्वमवाप्यते।

**इतिविषयशरारे सूनुनाविष्णुनाजौ,**
**त्रिभुवनवरशल्ये प्रोद्धते दानवेन्द्रे।।**

---

१. रघु० ११–१७
२. रघु० १२–१९
३. रघु० १५–२६
४. कुमारः ९–१३

**बलरिपुरथ नाकस्याधिपत्यं प्रपद्य,**
**व्यजयत सुरचूडारत्नघृष्टाग्रपाद:।।**[१]

अभिज्ञानशाकुन्तलमिति नाटकं एतादृशं नाटकमस्ति। यस्य तुलनायामेकमपि नाटकं स्थिरतां न याति। तस्मिन्नाटके राज्ञे दुष्यन्ताय शिक्षेयं प्रदत्ता यत् तस्य शस्त्राण्यातङ्कितान् हन्तुं पीडितान् च रक्षितुं सन्ति। निरपराधिनां हननार्थं न वरीवर्तन्ते–

**तत्साधुकृतसन्धानं प्रतिसंहरसायकम्।**
**आर्तत्राणाय व: शस्त्रं न प्रहर्तुमनागसि।।**[२]

राजा दुष्यन्तोऽपि ऋषिकन्यकानां परिपालनार्थं स्वकर्तव्यानां स्वयमेवोल्लेख: करोति–

**क: पौरवे वसुमती शासतिं शासितरि दुर्विनीतानाम्।**
**अयमाचरत्वविनयं मुग्धासु तपस्विकन्यासु।।**[३]

तथा शकुन्तलया सह गतेषु तपस्विषु प्रथम: राजानं निगदति–

**स्वसुखनिरभिलाष: खिद्यसे लोकहेतो:,**
**प्रतिदिनमथवा ते वृत्तिरेवं विधैव**
**अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं**
**शमयति परितापं छायया संश्रृतानाम्।।**[४]

अर्थात् स्वसुखस्येच्छां विहाय राजा दुष्यन्त: प्रजानां कल्याणे सन्नद्ध: दृश्यते। यथा पादप: स्वयमेव सूर्यस्यातपं सहित्वा संश्रितानां परितापं शमयति।

अनेन ज्ञायते दुष्यन्त: निजानखिलानि सुखानि परिहाय कुमार्गगामिदुष्टानां नियन्त्रणं विधायैव प्राजाया: सर्वतो रक्षणं करोति। अभिज्ञानशाकुन्तलमिति नाटके पञ्चमेऽङ्के शकुन्तलया सार्धं द्वितीय: तपस्वी याति। स राजानं प्रति प्रणिगदति यत् भवान् दुष्टान् स्वराजदण्डेन नियंत्रयति। प्रजायां मिथ: वैमनस्यं दूरीकृत्य सर्वानभिरक्षति। प्रजाया: माता-पिता-भ्राता-सर्वं भवान्नेवास्ति।

**नियमयसि विमाग प्रस्थितानान्तदण्ड:**
**प्रशमयसि विवादं कल्पसे रक्षणाम्।**

---

१. कुमारसम्भव: १७–५५
२. अभि० १–११
३. अभि० १–२३
४. अभि० ५–७

**अतनुषु विभवेषु ज्ञायतः रन्तु नाम,**
**त्वपि तु परिसमाप्तं वन्धुकृत्यं प्रजानाम्।।**[१]

**तत्रैव-येन येन विपुज्यन्ते, प्रजाः स्निग्धेन वन्धुना।**
**स स पापादृते तासां दुष्यन्त इति घुष्यताम्।।**[२]

दुष्यन्तः विघ्नकारिभिरातङ्कवादिभिः सज्जनात् भयात् मोचयितुं सयत्नो दृश्यते। सन्दर्भेऽस्मिन् वैशद्येन वर्णनमुपलभ्यते–

**कुतो धर्मक्रिया विघ्नः सतां रक्षितरि त्वयि।**
**तमस्तपति धर्मांशौ कथमाविर्भवति।।**[३]

**तथा प्रवर्ततां प्रकृति हिताय पार्थिवः,**
**सरस्वती श्रुति महती महीयताम्।**
**ममापि च क्षपयतु नीललोहितः,**
**पुनर्भवं परिगतशक्तिरात्मभू।।**[४]

भरतवाक्येऽस्मिन् त्वखिलायाः विश्वस्य सुरक्षायाः भावः परिपूरितः यस्य समक्षे कस्याश्चित् विधेरातङ्कः स्थातुं न शक्यते। सर्वदमन भरतस्यनामकरणमेव सम्पूर्णविश्वस्य भरणपोषणार्थ जातम्।

**पुनर्यास्तत्याख्यां भरत इति लोकस्य भरणात्।**[५]

विक्रमोर्वशीयमिति नाटकस्य प्रारम्भ एवातङ्कस्य परित्राणात् भवति। यदा पुरूरवोर्वशी दैत्येभ्यः मुक्तिं प्रददाति।

आपन्नानुकम्पिना महाराजेन प्रतिहताः खलु ते त्रिदश परिपंथिनो हताशदानवाः।। विक्रमोर्वशीयम्-प्रथमे अङ्के।

मालविकाग्निमित्रे नाटके यद्यपि प्रणयनप्रधानं नाट्यकाव्यमस्ति। तथापि महाकविः नाटकान्ते नायकमग्निमित्रं प्रति निरन्तरं प्रजायामुत्पन्नानां समस्तानामुपद्रवानां शान्त्यर्थं कामयते।

---

१. अभि० ५–८
२. अभि०–६
३. अभि० ५–१४
४. अभि० ७–३५
५. अभि० ७–३३

आशास्यमीति विगमप्रभृति प्रजानां संपत्स्यते न खलु गोप्तरिनाग्निमित्रे। मालिविकाग्निमित्रम् ५–२०

महाकविः सदैवातङ्कमुक्तराष्ट्रस्य सङ्कल्पनां करोति अतः स सिंहदन्तगर्णायतारं भरतम् आदर्शरूपेणाङ्गीकरोति। तारकासुरहन्तारं कुमारकार्तिकेयमुत्पादयति। असुराणां संहारकसत्ताधारिणाम् उपासनां करोति। लङ्काधिराजरावणस्यातङ्कात् मुक्तिप्रदातुः श्रीरामस्याराधनां करोति।

सम्प्रति न केवलं अखिले विश्वे विविधप्रकारकेभ्यः आतङ्केभ्यः सर्वे भयभीताः। सर्वत्र परिव्याप्तादातङ्कात् परित्राणार्थं व्यवस्थावादिसंस्थानां शक्तीनां प्रयासस्य नितान्तावश्यकता वर्तते। कालिदासस्य साहित्ये सदैव भारतवर्षस्य प्रशासनस्याधारशिलैवातङ्कात् मुक्ता प्राशासनिकी व्यवस्था एवास्ति। एतादृशां स्थितौ राष्ट्रस्य निरन्तरं दर्शनं करोति। यस्यां सुस्थिरा शान्तिः सुव्यवस्था च स्याताम्।

अतः युगेभ्यः विकसितस्य भयङ्करिदैत्यस्य विरोधे सभ्यसमाजस्य सामूहिकप्रयासैः रघुमिव दिग्विजययात्रा करणीया। नित्यं समुत्पन्नानां तारकासुराणां वधार्थं कार्तिकेयमिव सन्ततिः स्यात्।

महाकविना स्वरचनासु यावन्तः नायकाः प्रयुक्ताः, ते सर्वे नायकाः आतङ्कं समूलतो विनाश्य प्रजायाः रक्षणं पालनञ्च कृतवन्तः।

अतः मानवतायाः शिरासु प्रवहमानं रक्तम् आतङ्कस्य विरोधे ज्वालारूपेण परिवर्तनस्यावश्यकं वर्तते। यतोहि सृष्टावस्यां सर्गपालन–संहाराणांमातङ्कस्य मुक्त्यनन्तरमेव वयं विश्वमङ्गलकामना संयुतं गीतस्य माधुर्यमनुभवामः–

**सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु।**
**सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु॥**[१]

इदं कालिदासस्याभीष्टमेवास्ति। समासतो कथितुं शक्यते महाकविना कालिदासेन सदैव प्रत्येकस्य ग्रन्थस्य प्रणयने आतङ्कं प्रति विरोधिनी दृष्टिः स्वीकृता। कालिदासेन शान्तसभ्यभयरहितस्य विश्वस्य कल्पना सततं विहिता।

**सन्दर्भग्रन्थाः**

१. छान्दोग्योपनिषद्–सानुवादशाङ्करभाष्यसहितम्–मोतीलाल बनारसीदास दिल्ली–१९७७

२. रघुवंशमहाकाव्यम्–कालिदासग्रन्थावली–सम्पादक–आचार्यसीतारामचतुर्वेदी–चौखम्बा सुरभारती प्रकाशन वाराणसी–१९८०

---

१. विक्रमो० ५–२५

३. कुमारसम्भव–महाकाव्यम्-मल्लिनाथ की सञ्जीवनी टीका, चौखम्बा संस्कृत संस्थान वाराणसी-२०००

४. अभिज्ञानशाकुन्तलम्–गङ्गा हिन्दी व्याख्या सहित-व्याख्याकार गङ्गासागर राय-चौखम्बा संस्कृत संस्थान वाराणसी-२०००

५. विक्रमोर्वशीयम्–कालिदास ग्रन्थावली सम्पादक-आचार्य सीताराम चतुर्वेदी,-चौखम्बा सुरभारती प्रकाशन वाराणसी-२०००

६. मालविकाग्निमित्रम्–प्रकाश संस्कृत हिन्दी टीका सहित, चौखम्बा संस्कृत संस्थान, वाराणसी-२०००

७. संस्कृतसाहित्येतिहासः–चौखम्बा सुरभारती प्रकाशन, वाराणसी-१९८९

८. हलायुधकोश–हिन्दी समिति-सूचना विभाग, उत्तर प्रदेश, लखनऊ-१९६७

९. वाचस्पत्यम्–चौखम्बा संस्कृत संस्थान वाराणसी।

# महाकविमाघस्य पर्यावरणदृष्टिः

डॉ. ज्ञानधरपाठकः

वर्तमानकाले विश्वस्य जाज्वल्यमानैका विशिष्टा समस्या पर्यावरणस्य सर्वतः दरीदृश्यते। अस्मान् परितः यद् वातावरणं जलम्, आकाशञ्च विद्यते तत् सर्वं पर्यावरणे समाहितम्भवति। **प्रथमं** पञ्चतत्त्वयुक्तम्भवति भौतिकं शरीरम्, शरीरसञ्चालनाय एतेषां तत्त्वानामावश्यकता नितरामपेक्षते। पञ्चतत्त्वेषु "पृथ्वप्तेजोवाय्वाकाशादीनि" पृथ्वी, जलम्, अग्निः, वायुः, आकाशः, न्यायदर्शने पृथिव्याः लक्षणे– "तत्र गन्धवती पृथ्वी" इत्युक्तम्, गन्धवत्त्वं पृथिव्याः लक्षणम् तत्र गन्धं द्विविधं सुगन्धं दुर्गन्धञ्च। सुगन्धदुर्गन्धयोः ज्ञानं वायुमाध्यमेन नासिकया घ्राणेन्द्रियेन भवति। तदेव रसनेद्रियेण जलम्। एतेषां शरीरसञ्चलने विकासे च शुद्धिमपक्षते। **द्वितीयं** मानसिकं पर्यावरणम्भवति। पर्यावरणप्रदूषणाद् भूमण्डलमिदं विकृतिमेष्यति सर्वे जीवाः विविधैः रोगैः समाक्रान्ता भविष्यन्ति। जापानदेशस्य नागासाकी इति नगरे कृतस्य अमेरिकादेशस्य आण्विकविस्फोटस्य तेन उत्पत्त्यया प्रदूषणसमस्यया अद्यापि तत्र जातस्य शिशोः अङ्गभङ्गो दृश्यते। "शरीरमाद्यं खलु धर्मसाधनम्" इति वचनमुररीकृत्य शरीररक्षायै (स्वास्थ्यरक्षायै) पर्यावरणप्रदूषणदूरीकरणे उपायचिन्तनमतीवावश्यकम्। महाकविमाघेन स्वकीये शिशुपालपधे पर्यावरणस्योपादेयता स्वकाव्ये निगदिता। शिशुपालवधमहाकाव्ये पर्यावरणप्रदूषणदूरीकरणोपाये अद्यापि प्रासङ्गिकता प्राप्यते। पृथ्वी स्थलीयपर्यावरणस्य प्रधानं कारकं विद्यते। अस्यामेव पृथिव्यां पर्वताः, नद्यः, वनानि, वृक्षादयश्च अवस्थिताः। पर्वत–नदी–वन–वृक्षादीनां माध्यमेनैव पर्यावरणं शुद्धं भवति। स्वास्थ्यरक्षणाय सुगन्धयुक्तं वायुमपेक्षते–

**नवकदम्बरजोरुणिताम्बरैरधिपुरन्ध्रि शिलीन्ध्रसुगन्धिभिः।**<br>**मनसि रागवतामनुरागिता नवनवा वनवायुभिरादधे।।**[१]

सौरभयुक्तं वायुं प्राप्तये वनवृक्षलतादीनां संरक्षणमावश्यकमस्ति। वसन्तकाले प्रफुल्लानि सुकोमलानि पंकजपुष्पाणि सूर्यस्यातपेन म्लानतां यान्ति। पुष्पाणां समृद्धिस्तु सर्वत्र हृदयावर्जिका विद्यते।

---

१. शिशुपालः ६.३२

महाकवेर्माघस्य कालेऽपि नदीनां जलं शुद्धं पवित्रं प्रदूषणरहितमासीत्। माघकाव्ये नदीनां विस्तृतेन वर्णनमुपलभ्यते। समस्ताः नद्यः जलप्रपूरिता आसन्। रैवतकपर्वतान्निःसृता क्षुद्रनद्यः अपि जलप्रवाहपूर्णा आसन्। तत्र नदीषु विशालाः समुन्नताः गजा अपि स्नानार्थमवगाहन्ते स्म। एतेन नदीनां गाम्भीर्यं प्रकटीभवति। यदा क्षुद्रा नद्य एव माघकाले जलप्रचुरा आसन् तदा का कथा महानदीनाम्? गंगायमुनानद्योः विस्तृतं वर्णनं लभ्यते। यमुनायाः गाम्भीर्यं तु प्रख्यातमेव माघकाले यमुनागभीरा आसीत्। यमुनानदी कृष्णापि स्वजलेन जनानामघं हरतीति। यथा-

**या धर्मभानोस्तनयापि शीतलैः, स्वसा यमस्यापि जनस्य जीवनैः।**
**कृष्णापि शुद्धेरधिकं विधातृभिः, विहन्तुं महांसि जलैः पटीयसी।।**[१]

महाकविर्माघः स्वकाव्ये भगवतः श्रीकृष्णस्य चरितं लोककल्याणायैव संततान। भगवान् श्रीकृष्णो लोककल्याणायैव संबभूव। यथा-

**उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर! विश्वमीशिषे।**
**ऋते रवेः क्षालयितुं क्षमेत कः, क्षपातमस्काण्डमलीमसं नभः।।**[२]

माघकाव्यस्य नेता भगवान् श्रीकृष्णः सांस्कृतिकप्रदूषणदूरीकरणाय प्रादुर्बभूव। भगवान् श्रीकृष्णो निजेन तेजसा जगद्द्रोहिणां विनाशाय महीतलेऽवतीर्णः। भगवतः श्रीकृष्णस्य निखिलं कार्यं लोककल्याणाय भवति स्म। माघकाव्ये प्रथमसर्गे देवर्षिर्नारदो भगवन्तं श्रीकृष्णं प्रति देवराजस्य सन्देशमादाय गच्छति। देवराजः इन्द्रो देवर्षिनारदस्य माध्यमेन शिशुपालं विनाशयितुं श्रीकृष्णं सन्दिदेश। यथा–

**तदिन्द्रसंन्दिष्टमुपेन्द्र! यद्वचः, क्षणं मया विश्वजनीनमुच्यते।**
**समस्तकार्येषु गतेन धुर्यताम्, अहिद्विषस्तद्भवता निशम्यताम्।।**[३]

भारतीयानां मनीषिणां कार्यं त्यागप्रधानं तृष्णारहितञ्च भवति स्म। भगवान् श्रीकृष्णो जगत्कल्याणायैव दुष्टानां विनाशं करोति स्म। देवराजस्य सन्देशमादाय देवर्षिनारदो भगवन्तं श्रीकृष्णं शिशुपालं हन्तुं प्रेरयामास। शिशुपालस्य वधादेव विश्वस्य कल्याणं भविष्यतीति। भगवान् श्रीकृष्णो जगत्कल्याणायैव स्वपितृस्स्वसुः पुत्रस्य शिशुपालस्य विनाशं करोति। शिशुपालस्य विनाशं कृत्वा भगवान् श्रीकृष्णः देवसंस्कृतिं रक्षितवान्। शिशुपालो देवसंस्कृते विरोधी विनाशकश्चासीत्। देवर्षि-नारदो देवसंस्कृतिं संरक्षणायैव देवराजस्येन्द्रस्य सन्देशमादाय श्रीकृष्णमुपजगाम। भगवान् श्रीकृष्णो देवतसंस्कृतिं संरक्षणाय राक्षसवृत्तिं शिशुपालं जघान।

---

१. शि. व. म. का. सर्ग १२.६७
२. शि. १.३८
३. शि. १.४१

महाकविः माघः सांस्कृतिकप्रदूषणदूरीकरणाय देवराजस्येन्द्रस्य सन्देशमादाय देवर्षिर्नारदः श्रीकृष्णमुपजगाम, शिशुपालो देवसंस्कृतेर्विरोधी निशाचरसंस्कृते पक्षधरः आसीदिति वर्णनं कृतवान्। देवसंस्कृतिं शिशुपालः समूलमुत्पाटयितुं प्रयत्नशील आसीत्। शिशुपालस्य पक्षधरा बहवो राजानः तस्मिन् काले आसन्। ते सर्वे कृष्णस्य विरोधिनः आसन्। शिशुपालः स्वस्मिन् काले अजेयो महावीरश्च आसीत्। भगवान् श्रीकृष्णो देवसंस्कृतेः संरक्षक आसीत्। सः दैत्यानां विनाशायैव मनुष्यरूपेण पृथिव्यामवतीर्णः। यथाह महर्षिर्नारदः–

**निजौजसोज्जासयितुं जगद्द्रुहामुपाजिहीथा न महीतलं यदि।**
**समाहितैरप्यनिरूपितस्ततः पदं दृशः स्याः कथमीश! मादृशाम्।।**[१]

एकैवव्याधिना जनाः सन्तप्ताः भवन्ति। अनेकाः व्याधेयः यत्र सन्ति तत्र का कथा? तस्मिन् काले समाजे बहूनां रोगाणां समूह आसीत्। तेषु समूहेषु राजयक्ष्मा प्राधान्येन तत्र राजन्ते। यथा राजयक्ष्मायां बहवो रोगाः सदैव जायन्ते। राजयक्ष्मा रोगाणां समूहो भवति। तथैव शिशुपालोऽपि राक्षसवृत्तीनां नृपतीनां स्वयं समूहः आसीत्। शिशुपालस्य सहायकास्तस्मिन् काले बहवो राजान आसन्। अतस्तस्य विनाशो दुष्करं कार्यमासीत्। यथा–

**मा वेदि यदसावेको जेतव्यश्चेदिराडिति।**
**राजयक्ष्मेव रोगाणां समूहः स महीभृताम्।।**[२]

यथा राजयक्षा क्षयरोगे ज्वरपित्तादीनां जन्यानामनेकरोगाणां नाम राजयक्ष्मा भवति तथैव शिशुपालोऽपि अनेकेषां राज्ञां समूहो विद्यते। स नैकाकी सुजयः। यथा–

**अनेकरोगानुगतो बहुरोगपुरःसरः।**
**राजयक्ष्माक्ष्माक्षयः शोषो रोगराडिति च स्मृतः।**
**नक्षत्राणां द्विजानां च राज्ञोऽभूद्यदयं पुरा।**
**यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः।।**

यथा राजयक्ष्मा रोगाणां समूहो भवति तथैव शिशुपालोऽपि विद्यते। अतः शिशुपालो दुर्जयो विद्यते। दमघोषस्य पुत्रः शिशुपालः सुदमो न विद्यते। शिशुपालेनोपकृता बाणासुरकालयवनाशाल्व-रूक्मीद्रुमादयो राजानस्तमः प्रकृतयः सन्ति, एते प्रदोषं राजानमेवानुवर्तयिष्यन्ते। सर्वे शिशुपालस्यैवानुगामिनः सन्ति। यथा–

---

१. शि. १.३७
२. शि. २.९६

**ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयः।**
**तमः स्वभावास्तेप्येनं प्रदोषमनुयायिनः।।**[१]

अस्मात् कारणात् शिशुपालः साम्प्रतं शक्तिसम्पन्नो विद्यते। भवतः सर्वे शत्रवः वाणासुर-कालयवनशाल्वरूक्मीद्रुमाद्रयो राजानः शिशुपालस्य सहायका भविष्यन्ति। साम्प्रतमाक्रमणात् शिशुपालो अजेयो भविष्यति, शिशुपालस्य संकेतं प्राप्य भवतां शत्रवः सर्वे राजानो दमघोषसुतस्य शिशुपालस्य सहायतां करिष्यन्ति। अतः साम्प्रतं शिशुपाले आक्रमणं नोचितम्। शिशुपालस्य साम्प्रतं बहूनि मित्राणि सन्ति। भवतः अनेके शत्रवः सन्ति। अतः प्रथमं धर्मराजस्य युधिष्ठिरस्य यज्ञे एव गन्तव्यम्। शिशुपालाक्रमणात् धर्मराजस्य युधिष्ठिरस्य राजसूययज्ञोऽपि पूर्णो न भविष्यति। अतः धर्मराजो युधिष्ठिरोऽपि भवतः शत्रुर्भविष्यति। अस्मात् कारणादेव सम्प्रति शिशुपालाक्रमणं न समयानुकूलम्, प्रथमं तावत् धर्मराजस्य राजसूययज्ञे एव गन्तव्यम्, साम्प्रतं तु भवतां प्रतिज्ञाऽपि पूर्णा न जाता। शिशुपालाक्रमणे सति भवता प्रतिज्ञाऽपि पूर्णा न भविष्यति। धर्मराजस्य राजसूययज्ञावसरे यथाकालं भवतां प्रतिज्ञाऽपि पूर्णा स्यात्। सम्प्रति आक्रमणं नोचितम्। कालेऽस्मिन् शिशुपालो बलवान् विद्यते। तस्य बहवः सहायाः सन्ति। क्षुद्रोऽपि वृहत्सहायं प्राप्य कार्यान्तं गच्छति। सफलतां प्राप्नोति, क्षुद्रतरोऽपि जनः महतां सहायं लब्ध्वा विजयं प्राप्नोति। निर्बलोऽपि बलवतां साहचर्येण बलवन्तमपि जेतुं प्रभवति। क्षुद्रा गिरिनद्योऽपि महानदीनां गंगाप्रभृतीनां सहायं लब्ध्वा समुद्रं प्रति यान्ति। यथा क्षुद्रागिरिनद्यः समद्रमुपगन्तुं न पारयन्ति किन्तु गंगादिषु मिलित्वा समुद्रं यन्ति। यथा-

**बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति।**
**सम्भूयाम्भोधिमभ्येति महानद्यः नगापगाः।।**[२]

अधुना शिशुपालपक्षीया राजानो राक्षसास्तस्य सहायं करिष्यन्ति एव। परञ्च साम्प्रतं भवतः शत्रुभूता राजानो वाणासुररुक्तिकालयवनादयश्च तस्य सहायतां करिष्यति। अतः शिशुपालः सम्प्रति सबलोऽजेयश्च वर्तते। बलवता शत्रुणा सह युद्धं नोचितम्। शत्रोरसाध्यत्वं पराजयकारणं भवति।

आक्रमणात् पूर्वं स्वप्रतिज्ञा पूरणीया। साम्प्रतं शिशुपालाक्रमणाद् भवतां प्रतिज्ञाऽपि पूर्णा न स्यात्। प्रतिज्ञा परिपालनीया, प्रतिज्ञाप्रपूरणाय कालस्य प्रतीक्षा विधेया।

महाकविर्माघः राक्षसप्रवृत्तीनां जनद्वेषिणां राक्षसस्वभावानां दुष्टानां विनाशायैव शिशुपालवधाख्यं काव्यं रचनामास। राक्षसवृत्तीनां जनानां विनाशः कथं करणीय इत्यपि स्वकाव्यं प्रकाशयामास। एवञ्च

---

१. शि. २.९८
२. शि. २.१००

महाकविर्माघ: सांस्कृतिकं प्रदूषणं वर्णयित्वा तद्दूरीकरणमपि स्वयमेव समुपस्थापयामास। देवसंस्कृति-समुत्थानायैव महाकविना माघेन काव्यमेतत् कृतम्। देवसंस्कृति-संस्थापनमेव काव्यस्यास्य मुख्यं प्रयोजनम्। संस्कृतिपर्यावरणस्य दोषान् विनास्य संस्कृतिपर्यावरण-संस्थापनमेव महाकवेर्माघस्योद्देश्यम्।

वनस्पतीनामौषधीनां नदीनां विविधपवनानां वनोपवनानां, ऋतुप्रभृतीनां वर्णनमतिशेतेऽन्यान् महाकवीन् नात्र शंकालेशोऽपि।

आधुनिकपर्यावरणस्य स्वरूपं किमप्यपूर्वमेव चित्रितम्। तत्कालीनं पर्यावरणं सर्वविधं प्रदूषणरहितमेवासीदितिप्रतिपादितमेव। न केवलं भौतिकमपितु वौद्धिकपर्यावरणमपि माघकाव्ये विशुद्धमेवासीत्। लोककल्याणकरस्याकारणकरूणालयस्य भगवत: श्रीकृष्णस्य समुज्वलं चरितमत्र विस्तीर्णम्। भगवत: श्रीकृष्णस्य लोककल्याणकरं, देवसंस्कृतिसंरक्षकं पवित्रं चरित्रमत्र राजते। सामाजिकं प्रदूषणं दूरीकरणाय बलरामोद्धवादीनाञ्चावश्यकता विद्यते। भगवत: श्रीकृष्णस्य तत्कालीने समाजेऽद्भुतमवर्णनीयञ्च वैशिष्ट्यमासीत्।

अस्मिन् काव्ये समस्तानि काव्यतत्त्वानि विराजन्ते। पर्यावरण-ख्यापकानि वहूनि स्थलानि सन्ति। द्वारिकानगरीवर्णनम्, रैवतकपर्वतवर्णनं, यमुनावर्णनं, गिरिनदीनां वर्णनं, वनस्पतीनां वनानां वा वर्णनं भवेत्, ऋतुवर्णनं स्यात्, उताहो सूर्योदय-चन्द्रोदय-प्रभात-वर्णनं वा स्यात्, काव्येऽस्मिन् सर्वत्र पर्यावरणं संरक्षितं विद्यते। माघे सर्वं विशुद्धं पर्यावरणं समुपलभ्यते। पर्वतानां वृक्षाणां नदीनां फलपुष्पादीनां, वनस्पतीनाञ्च समृद्धिर्नितरां पर्यावरणदृशा प्रदूषण-विरहिता प्राण्युपकारिणी च संदृश्यते। प्रकृतेर्मानवीकरणं माघकाव्यस्य समाकर्षणं विद्यते। सूर्योदयस्य, चन्द्रोदयस्य, सूर्यस्य, चन्द्रस्य, सन्ध्याकालस्य, प्रभातकालस्य च कमनीयं चित्रणं पर्यावरणस्याध्ययनदृशातिशयमहत्त्वपूर्णं वर्तते। एवञ्चास्य काव्यस्य पर्यावरणीयं योगदानं तिरोहितं न विद्यते।

अतो निगद्यते यत् पर्यावरणीयं योगदानं शिशुपालवधस्यास्य काव्यस्योकृष्टतमं विद्यते। साम्प्रतमपि लोके तुलसी-निम्बाम्रबिल्वकदली-कपित्थाश्वत्थ-धातृफल-वटादीनां महिमा तिरोहितो नाभवत्, नापि गंगाया: पूज्यता तिरोहिता।

विश्वस्य सर्वे प्राणिन: स्वविकासेन समृद्ध्या च जीवनं यापयितुं पर्यावरणमाश्रयन्ते, यदि कोऽपि मात्रातीतं प्रकृतेरुपभोगं विदधाति तदा अनया प्रवृत्या पर्यावरणं प्रदूषितं भवति। प्रकृतौ पर्यावरणे विद्यमाना सर्वे अवयवा: सन्तुलिता: सन्ति। कस्यचिदपि वृद्धिर्न्यूनता वा न विद्यते। यदि कस्यचिदवयवस्य मात्राधिकमुपभोगं कुर्वन्ति जनास्तदा तस्य प्रकृतौ न्यूनता जायते। यस्मात् प्रदूषणं समुत्पद्यते। एषा स्थिति: जनानां कृते हितकारिणी न विद्यते।

माघकाव्ये भौतिके आन्तरिके वा पक्षे कुत्रापि पर्यावरणप्रदूषणबीजं नोपलभ्यते।

अधुना विश्वस्मिन् जगति पर्यावरणस्यैका जाज्वल्यामाना प्रमुखसमस्या जाता। अस्माकं देशेऽपि वैज्ञानिका: पर्यावरणसचेतका: जना: समस्यामिमां समाधातुं भृशं चेष्टमाना दृश्यन्ते। अस्माकं प्राचीनवाङ्मयं तु प्राचनीकालादेव प्रकृतितत्त्वेषु देवबुद्धिं संस्थाप्य तत्र पूज्यां बुद्धिमुत्पाद्य तेषां संरक्षणाय प्रेरयति पर्यावरणक्षेत्रे माघकाव्यस्योत्कृष्टमादर्शं स्थापयति।

# उत्तररामचरिते वाक्तत्त्व-विश्लेषणम्

डॉ॰ प्रज्ञा शर्मा

वाचः सन्दर्भे भारतीयतत्त्ववेतॄणां महच्चिन्तनं बहुशः समुपलभ्यते। वागयोगविदृषीणां नये तु वाण्याः स्वरूपज्ञानं सर्वेषां कृते अनिवार्यमस्ति। वाण्याः–उपासकास्तु भवबन्धनान्विनिर्मुक्ता सन्तः परमं पदं प्राप्नुवन्ति। तथा चोक्तम्-ते मृत्युमति वर्तन्ते ये वै वाचमुपासते। सर्गप्रसवे तु वागेव कारणभूताऽस्ति ततः आरभ्य वागेव विमर्शस्य सम्प्रेषणस्य प्रधानं साधनमस्ति। अस्याः व्यापकता वैदिककालत एव सिद्धास्ति। सा एव ब्रह्मरूपेणावतिष्ठते। उक्तं चापि विद्यते वाग्धि ब्रह्म।[1]

लेखेऽस्मिन् भवभूतिविरचिते उत्तररामचरिते विवृतं वाक्स्वरूपं विचार्यते प्रथमं तावत् वाण्याः वास्तविकं स्वरूपं किमस्ति अस्याः रूपाणि च कानि सन्ति इति सन्दर्भे किञ्चिद् विमृश्यते। वाचश्चत्वार्यवस्थानि विद्यन्ते। एतेष्वेव स्थानेषु त्रीणि खल्वभ्यन्तरे पिण्डगुहायाम् अत्यक्तरूपेणान्तर्हितानि सन्ति। वाचश्चतुर्थमवस्थानमेव मनुष्याणां व्यक्तभाषणे श्रवणे वा संघटते। शब्दान्तरेण पारिभाषिकरूपेणैतानि चत्वारि पदानि परा, पश्यन्ती, मध्यमा, वैखरीति प्रयुज्यन्ते। वैखर्याः वाण्याः विकाससन्दर्भे विचारकैः पाणिनीयं शिक्षावचनमनुस्मृत्योक्तम्–

**आत्मा बुद्ध्या समेत्यर्थान् मनोयुक्तं विवक्षया।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।**
**मारुस्तूरसि चरन् मन्दैः जनयति स्वरम्।।**

अयं स्वरो झंकृतिरूपेण तालौ जिह्वायाः विविधेषु भागेषु स्पर्शं कुर्वन् शब्दरूपेण परिवर्तते। उत्तररामचरिते तु अस्य व्यक्तशब्दस्यैव व्याख्यानं वाग्रूपेण कृतं विद्यते। जानन्त्येव शेमुषीधुरीणा यत् महाकविभवभूतिः न केवलं कारुण्यं रसोद्भावे एव स्वनैपुण्यं-सन्दर्शयति अपितु व्याकरण-न्याय-मीमांसाशास्त्रेषु निष्णातत्त्वादेव 'पदवाक्यप्रमाणज्ञ इत्युपाधिना समलंकृतोऽभूत्' लौकिकेऽस्मिञ्जगति जनाः वैखरीवागेव वाक् पदेन स्वीकुर्वन्ति इति हेतोः शब्दतत्त्वस्य प्रकाण्डपण्डितो भवभूतिः उत्तररामचरिते विविधस्थलेषु अस्याः स्थूलवाण्याः एव वर्णनं कृतवान्। वाचः क्षेत्रे अस्य पाण्डित्ये नास्ति काचिच्छङ्का।

---

१. ऋग्वेदसंहिता १०–१२५

अयं खलु शब्दार्थतत्त्वयोः पण्डितः आसीत्, वाण्याः सन्दर्भे स खलु मच्चिन्तनं व्यदधात्। वाग्देवी वश्येव समन्वर्ततेति तथ्यं स्वयमेवोद्धुष्यते तेन–

**'यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्तते'** इति।

कविरयं ग्रन्थस्य मङ्गलाचरणं वाण्याः स्तवनेनैव करोति। यथा–

**इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे।**
**विन्देम देवतां वाचममृतामात्मनः कलाम्॥**[१]

अत्र देवतावाचम् इत्यनेन शब्दब्रह्मणः बोधो भवति। अमृताम् इत्यनेन शब्दस्य अविनाशित्वं नित्यत्वं वा ध्वन्यते। आत्मनः कलाम् इत्यनेन बोधो भवति यत् वाक्तत्त्वं शब्दब्रह्मणः कला अंशभूतमस्ति। दैनिकजीवने वाण्याः प्रयोगविषये कविरयं महदौदार्यं प्रदर्शयति। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते इति सिद्धान्तमनुसरन् स कथयति यत् वार्ताक्रमे वाण्याः प्रयोगो मुक्त-भावेन अस्माभिः करणीयः। छिद्रान्वेषिणः जनास्तु समेषां वाण्यां दोषदर्शनं कुर्वन्त्येव किन्तु तेन न कदापि दैन्यमनुभाव्यमिति।

**सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।**
**यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः॥**[२]

सामान्यजनानां वाणी अर्थमनुसृत्य सम्प्रवर्तते, किन्तु ये जनाः वाग्योगिवद्रूपेण ऋषिपदमारुढाः सन्ति तेषां वाण्याः अनुगमनमर्थ एव करोति। तेभ्यः सुवासा वाणी जायेव तन्वं विसस्रे।

**लौकिकानां हि साधूनामर्थं वागनुवर्तते।**
**ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति॥**[३]

वाचः महत्त्वं स्वयमेव सिद्धमस्ति। वागेव मानवानामभिलाषाः पूरयति। दौर्भाग्यमपाकरोति, कीर्तिं चोत्पादयति। इयं दुष्टानां शमनमपि करोति। सुनृता वाणी समेषां मङ्गलानां मातृरूपेण विद्यते। किन्तु उन्मादग्रस्ता दृप्ता च वाणी राक्षसीवास्ति। किञ्च, सा हि सर्ववैराणां कारणभूता, तथा लोकतिरस्कास्य जनयित्री। अस्माद्धेतोः मधुरा वाणी एव ऋषिभिः प्रशंस्यते।

**ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः।**
**सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः॥**[४]

१. उत्तररामचरितम् १.१
२. तदेव १.८
३. तदेव १.१०
४. तदेव ५.२९

शब्दतत्त्वस्य सूक्ष्मविश्लेषणरूपेण भवभूतिना शब्दब्रह्मविषयेऽपि स्वकीयो विचारः सन्दर्शितः। जगदिदं शब्दब्रह्मणः विवर्तः तथा चोक्तं भर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे–

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**[1]

शब्दब्रह्मणः एतादृशमेव स्वरूपं वर्णयति भवभूतिः। वाल्मीकिसन्दर्भे आत्रेयीमुखेन स वाण्याः अलौकिकं स्वरूपं वर्णयति–

तेन हि पुनः समयेन तं भगवन्तं प्रति प्रकाशमृषिमुपगम्य भगवान् भूतभावनपद्मयोनिरवोचत्–ऋषे! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि। तद् ब्रूहि रामचरितम्। अत्याहत ज्योतिरार्षं ते चक्षुः प्रतिभातु। आद्यः कविरसि–इत्युक्त्वान्तर्हितः। अथ स भगवानप्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणः तादृशं विवर्तमितिहासं रामायणं प्रणिनाय।[2]

अनेनानुशीलनेन सुस्पष्टं यत् महाकविः भवभूतिः वस्तुतः न केवलं साहित्यशास्त्रमर्मज्ञः अपितु पदवाक्यप्रमाणज्ञोऽपि अस्ति। उत्तररामचरितस्य प्रस्तावनायां कथितमेवास्ति पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जतुकर्णीपुत्रः। अत एव वक्तुं शक्यते यत्–

**भवभूतेः कवीन्द्रस्य वाणी कामदुधा मता।**
**ब्रह्मानन्दसहोदर्यः या तनोति मुदं सदा।।**

---

१. वाक्यपदीयम् १.१
२. उत्तररामचरितम् अंक २

# भूमौ ध्रुवस्थितिः

डॉ॰ आशुतोषकुमारझा

पृथिव्याः गतिः द्विविधा भवति प्रथमा दैनन्दिनी गतिः द्वितीया चा सांवत्सरिकी। क्रान्तिवृत्तौ चलन्ती पृथिवी षष्ट्युत्तरशतत्रयात्मकेषु दिवसेषु अस्य वृत्तस्यैका परिक्रमा पूर्णं करोति। गतिरियं पृथिव्याः सांवत्सरिकी। पृथ्वी क्रान्तिवृत्तौ चलति, स्वाक्षे च परिभ्रमति अर्थात् चतुर्विंशतिहोरायां स्वाक्षं परितः परिभ्रमति, चलति गतिरियं दैनन्दिनी जाता पृथिव्याः। अयमेवाक्षः पृथिव्याः 'ध्रुव' नाम्ना ख्यातः। आभ्यां दक्षिणोत्तरध्रुवौ दक्षिणोत्तरदिशायामवस्थिते सति क्रमेण 'दक्षिणीध्रुवः', 'उत्तरीध्रुवः' च विख्यातः। दक्षिणोत्तरध्रुवाभ्यां भूत्वा गच्छन्तः वृत्तः याम्योत्तरवृत्तरूपेण प्रसिद्धः। अनयो याम्योत्तरवृत्तयोर्मध्ये अर्थादुत्तरध्रुवात् १०° दक्षिणे, दक्षिणध्रुवात् १०° उत्तरभागे विषुवद्वृत्तः भवति। विषुवद्वृत्तो एव कालवृत्तरूपेणापि ज्ञायते। यः वृत्तः अखण्डां पृथ्वीं द्वे समभागे विभाजयति। यत्र भगवान् सूर्यः वसति। येन कारणेन द्युरात्रिर्जायते। अनेन विधिना उत्तरीध्रुवं विद्यते इति तु समुचितमेव। यदि पूर्णरूपेण उत्तरदिशायां न विद्यते। तदा याम्योत्तरवृत्ते तु विद्यते एव। क्षितिजवृत्तेन ज्ञायते यद् ध्रुवस्य यदि कश्चिद् नियतविन्दुर्विद्यते तु स्वोत्तरात् कियदुपरिनीच्चैः वा विद्यते।

शतपथब्राह्मणः ध्रुवस्य सम्बन्धे उक्तवान् यत् यज्ञपुरुषस्य नाभितो उपरिभागः 'प्राची' अधोभागश्च 'प्रतीची' कथ्यते। यज्ञपुरुषस्य नाभितो पश्चिमप्राण एव ध्रुवः कथ्यते। एतदतिरिक्तं पृथिव्याः स्वप्रतिस्वस्तिकप्रतिष्ठितः प्राणोऽपि तिष्ठति तदेव 'ध्रुवः' नाम्ना प्रसिद्धः विद्यते। अथ "योऽयं पश्चात् स ध्रुवः"। एतदतिरिक्तमपि ध्रुवस्य नामकरणसन्दर्भे कथितवान् यत्–

"देवा ह वै यज्ञं तन्वानास्तेऽसुरराक्षसेभ्य आसङ्गाद् विभयांचक्रुः। तान् (देवान्) दक्षिण-तोऽसुराक्षसान्यासेजुः। तेषामेतान्दक्षिणान् ग्रहान्–उज्जधनुः। अप्येतं दक्षिणं हविर्धानं भुज्जधनुः। अथैतमेव न शेकुरुद्धन्तम् तत् उत्तरमेव हविर्धानं दक्षिणं हविर्धानमदृहत्। तदेतं न शेकुरुद्धन्तम् तस्मात् ध्रुवो नाम्"[1]। खगोलस्थध्रुवाभ्यां पृथ्वीध्रुवयोः सम्बन्धार्थं पृथिव्याः रेखाभ्यस्तस्या कल्प्यते। पृथिव्या पिण्डः वृत्ताकारः भवति। अस्य उत्तरभागः उत्तरध्रुवप्रोतः विद्यते दक्षिणभागश्च दक्षिणध्रुवपोतः तिष्ठति। वस्तुतः पृथ्वी याम्योत्तरध्रुवयोः मध्यभागे अवस्थिता विद्यते। अत्रैव ध्रुवरूपे कीलके धराचतुर्विंशतिहोरायां भ्रमणमेकं पूर्णं करोति। कीलकोऽयं पौराणिकैः "मेरु" रूपेण स्वीक्रियते। अयं मेरुः सुमेरुः कुमेरुश्च

---

१. श॰ ब्रा॰–का॰ ४ अ॰ २, श्लोके–१९।

नाम्ना व्यवहृतो विद्यते। अथ मेरुः पृथिव्याः केन्द्रात् पारं भूत्वा बहिः निःसृतवान् विद्यते। धरित्र्या उत्तरभागस्य मेरुः उत्तरध्रुवादाबद्धः दक्षिणभागस्य मेरुः दक्षिणध्रुवादाबद्धो विद्यते। पृथिव्या उत्तरसीमान्तभाग एव सुमेरुर्विद्यते तत्र देवप्राणस्तिष्ठति। अतएव सुमेरुः कथ्यते एवं धरित्र्याः दक्षिणसीमान्तभागे याम्यध्रुवस्य अग्रभागे अवस्थितो मेरुः आसुरप्राणप्रधानत्वात् 'कुमेरुः' कथ्यते।

**मेरौ मेषादिचक्रार्धे देवाः पश्यन्ति भास्करम्।**
**सकृदेवोदितं तद्वदसुराञ्चलादिगम्।।**[१]

ध्रुवस्यास्तित्वः स्थिरबिन्दुरूपेण विद्यते इति नाम्ना ज्ञायते। धरायाः सुमेरुः कुमेरुश्च चक्रक्रमेणोत्तरदक्षिणध्रुवाभ्यां आबद्धो विद्यते किन्तु शतपथब्राह्मणानुसारेण ध्रुवो स्थिरो न विद्यते। ध्रुवो चलायमानः। शतपथब्राह्मणानुसारेण ध्रुवः विष्णोः नासिकां परितः परिक्रमति। परिक्रमेयं पञ्चविंशतिसहस्राब्दे पूर्णः भवति। वयं मेरुः चलायमानं पश्यामः। ब्रह्मणः काले अयं मेरुः हिरण्यशृङ्गपर्वते आसीनो आसीत् परन्त्वद्य ततो अतीवाग्रे अवस्थितोऽस्ति। अतएव ध्रुवस्य चलायमानत्वं मन्यते अस्माभिः। मेरुः ध्रुवादाबद्धो विद्यते। यदि ध्रुवयोः गतित्वं न स्यात्तदा मेरोः गतिर्न सम्भवेत्। चलायमानं मेरुः अस्माभिः दृश्यते। अते ध्रुवयोरपि गतिः सिद्धयति। "नाकस्था विष्णोः परितस्तु वेदध्वरव्यासार्धगं संचरति ध्रुवं ध्रुवः।" कमलाकरभट्टमहोदयेनापि गतिशीलं ध्रुवं स्वीकृतम्–

**"ध्रुवतारां स्थिरां ग्रन्थे मन्यते ते कुबुद्धयः।**
**साकं तैस्तुविवादोऽपि सतां मूढत्वमेव हि।**
**ध्रुवस्थानस्थितं यद्यत् कदम्बभ्रमणेन भ्रम्।।**[२]**"**

अर्वाचीनज्योतिर्विज्ञानानुसारेण खगोलस्य यो बिन्दुश्चलोदृश्यते। ध्रुवस्थानं कथ्यते। उत्तरध्रुवस्थानाति-समीपवर्तिनक्षत्रं ध्रुवः कथ्यते। इष्टस्थानस्य अक्षांशनिर्णयो ध्रुवप्रदेशस्य वेधेनोन्नतांशमधिगम्य भवति, अत एव काले काले–

ध्रुवोन्नतांशानां वेधान् कुर्वन्ति। अद्भुतं दृष्टं तैर्यदुन्नतांशानां किञ्चिदतिसूक्ष्मातिसूक्ष्मान्तरं दृश्यते काले–काले। बहुकालपर्यन्तं वेधान् विधाय तैर्निश्चितं यद् ध्रुवस्य विचलनं पार्थिवध्रुव-विचलनाज्जायते। पार्थिवध्रुवयोर्विचलनमिदं अतिसूक्ष्मातिसूक्ष्मम् अर्थात् प्रत्येको ध्रुवः ४० फिट पर्यन्तमेव विचलति। सर्वाधिकं विचलनमप्येकाया विकलाया न्यूनमेव। ध्रुवविचलनं 'आइलर' महोदयेन गणितेनैव सूचितम् पश्चात् वेधेन निर्णीतम्। ध्रुवो निजमध्यमस्थानाद् द्विप्रकारकया गत्या विचलति। प्रथमगतेरान्दोलनं ०.१८ आवृत्तिकालः ४३२ दिनानि, द्वितीयगतेरन्तरान्दोलनं".०९ आवृत्तिकालश्च ३६५ दिनानि।

१. सू॰ सिद्धान्त–भूगोलाध्याये–श्लोके–६७।
२. सि॰ त॰ वि॰ मध्यमाधिकारे गोलपरिचये श्लोके–७९–८०।

ज्योतिषशास्त्रे पृथिव्याः दिग्देशकालानां निर्धारणे ध्रुवस्य महती भूमिका सिद्धयति। इमौ बिन्दू स्थिरौ मत्वा वृत्तानां निर्माणं भवति तथा ज्योतिशास्त्रं पृथिव्यां भूयमानेषु क्रिया कलापेषु आभ्यामेवदृष्टिपातं करोति। सूर्यसिद्धान्तकारः ध्रुवस्य स्थानस्य निर्धारणविषये—

**मेरोरुभयतो मध्ये ध्रुवतारे नभः स्थिते।**
**निरक्षदेशसंस्थानामुभये क्षितिजाश्रये।।**[1]

ध्रुवविषये भास्कराचार्येणैवं कथितम्—

**सौम्यं ध्रुवं मेरुगताः खमध्ये याम्यं च दैत्याः निजमस्तकोर्ध्वे।**
**सव्यापसव्य—भ्रमहक्षचक्रं विलोकयन्ति क्षितिजप्रसक्तम्।।**[2]

ग्रहकक्षानक्षत्रचक्रमनवरतं ध्रुवद्वयाधारं प्रवह्यानिलेरितं परिभ्रमति। नक्षत्रमण्डलं ध्रुवेन सह आवद्धः। नक्षत्रमण्डलस्य आधारः ध्रुवः। कूर्मपुराणे एवं भणितम्—

**सर्वे ध्रुवे महाभागा निबद्धा वायुरश्मिभिः।**
**ग्रहर्क्षताराधिष्यानि ध्रुवे बद्धान्यशेषतः।।**
**भ्रमन्ति भ्रामयन्त्येनं सर्वाण्यनिलरश्मिभिः।।**[3]

नक्षत्रमण्डलध्रुवमध्यसम्बन्धविषये सूर्यसिद्धान्ते—

**भचक्रं ध्रुवयोर्नद्धमाक्षिप्तं प्रवहानिलैः।**
**पर्येत्यतजस्त्रं तन्नद्धा ग्रहकक्षा यथाक्रमम्।।**[4]

ध्रुवेन सह कालनिर्धारकस्य प्रत्यक्षसम्बन्धः यत् क्रान्तिमण्डले अर्कः निरन्तरं भ्रमति। क्रान्तिमण्डलः कदम्बस्थानात् ९०° अंशात्मकः वृत्तः तथा च ध्रुवस्थानात् जिनांशैः २४° वृत्तं कदम्बवृत्तम्—

**जिनांशैर्यद् ध्रुवाद् वृत्तं कदम्बर्क्षमण्डलम्**
**यतस्तस्मिन् कदम्बर्क्षं भ्रमति प्रवहेरितम्।**
**यत् कदम्बान्नवत्यंशैर्वृत्तं तत् क्रान्तिमण्डलम्।।**[5]

अतोऽत्र कालनिर्धारणे ध्रुवस्य महती भूमिका। गोलः प्रसिद्धः ज्योतिशास्त्रे। गोलोऽपि ध्रुवः स्थिरः मन्यते। यथा ज्योतिर्विदेन श्रीसीतारामझोपाख्येन कथितम्—

१. सू० सिद्धान्त—भूगोलाध्याये—श्लोके—४३।
२. सि० शि० गोलाध्याये भुवन कोशे, श्लोके—४१।
३. कूर्मपुराणे अ० ४६, श्लो० ३०।
४. सू० सिद्धान्त—भूगोलाध्याये—श्लोके—७३।
५. गोलपरिभाषायाम्, श्लोके २८।

**भूकेन्द्राद् ध्रुवगं सूत्रं यद्गोले यत्र संयुतम्।**
**तद्गोले तद् ध्रुवस्थानं गोलविज्ञैर्निगद्यते।।**[१]

गोल: ध्रुवाधार:। गोले द्वावेव बिन्दू स्थिरौ। तत्र कालनिर्धारक: विषुवद्वृत्त: ध्रुवस्थानात् नवत्यंशात्मकं वृत्तम्। तद्धरातलगतो देशो निरक्षदेश:। निरक्षदेशे अक्षांशाभाव:। अक्षांशदेशान्तरयोर्निधारक: ध्रुव:। ध्रुवाक्षांशदेशान्तरयोर्मध्ये सम्बन्धविषये सूर्यसिद्धान्ते अनेन प्रकारेण वर्णितम्–

**अतो नाक्षोच्छ्रयस्तासु ध्रुवयो: क्षितिजस्थयो:।**
**नवतिर्लम्बकांशास्तु मेरावक्षांशकास्तथा।।**[२]

निरक्षदेशध्रुवयोरन्तरं भूपरिधिश्चतुर्थांशतुल्यम्। निरक्षदेशस्य कोणात्मकमन्तरं ९०° 'नवत्यंशात्मक:' भवति। अत: ध्रुव: देशा निर्धारक: ज्योतिषशास्त्रे। दिक्निर्धारकोऽपि ध्रुव:।

**खमध्यध्रुवयोर्लग्नं वृत्तं याम्योत्तरं तथा।**[३]

अत: निरक्षदेशस्य क्षितिजवृत्ते ध्रुवौ अवस्थितौ। यथा भास्कराचार्येण भणितम्–

**निरक्षदेशे क्षितिमण्डलोपगौ ध्रुवौ नर: पश्यति दक्षिणोत्तरौ।**
**तदाश्रितं खेजलयन्त्रवत्तथा भ्रमद्भचक्रं निजमस्तकोपरि।।**[४]

अतो ज्योतिशास्त्रे त्रिप्रश्नसमाधाने ध्रुवस्य महती भूमिका वर्त्तते।

---

१. गोलपरिभाषायाम्, श्लोके १४–१५।
२. सू॰ सिद्धान्त--भूगोलाध्याये–श्लोके–४४।
३. गोलपरिभाषायाम् श्लोके–१७।
४. सि॰ शि॰ गोलाध्याये भुवनकोशे श्लोके–४२।

# वेदों में यज्ञ द्वारा पर्यावरण संरक्षण

डॉ॰ सुरेखा पटेल

पर्यावरण का नाम लेते ही प्रकृति में जो कुछ भी परोक्ष या प्रत्यक्ष है यथा–पृथ्वी, सूर्य, वायु, आकाश, जल, अग्नि, वनस्पति, मृदा, पक्षी, मानव आदि का स्मरण हो आता है। पर्यावरण का शाब्दिक अर्थ है–"चारों ओर से घेरने वाला"। यह दो पदों के मेल से बना है–परि+आवरण। 'परि' शब्द का अर्थ है–'चारों ओर' तथा 'आवरण' का अर्थ है 'घेरा'। इस घेरे में ही सजीव और निर्जीव सभी तत्त्व विद्यमान हैं। 'पर्यावरण' से प्रत्येक जीव का जन्मतः सम्बन्ध है। आदिकाल से मानव पर्यावरण से ही पोषित होता रहा है। पृथ्वी उसका निवास स्थल है, वायु उसका प्राण; जल जीवन है, सूर्य ऊर्जास्रोत है तो वनस्पति, वृक्षादि उसके धारक, पोषक और रक्षक हैं। प्रकृति का कोई भी तत्त्व ऐसा नहीं है, जिससे मनुष्य उपकृत न हुआ हो। आज यदि वह उत्थान के उत्कर्ष को छू रहा है तो वह पर्यावरण के बल पर ही, जो उसे सभी प्रकार के संसाधन प्रदान करता है। पर्यावरण निर्माण में सबका योगदान महत्त्वपूर्ण है। जहाँ तक पर्यावरण शुद्धता की बात है, उस संदर्भ में वृक्षों एवं वनस्पति जगत् का सर्वाधिक योगदान है। वृक्ष की महिमा महर्षि वेदव्यास की दृष्टि में सबसे महत्त्वपूर्ण है।

**दशकूपसमो वापी दशवापी समोह्रदः।**
**दशह्रद समो पुत्रः दशपुत्रसमो द्रुमः॥** मत्स्यपुराणम्

अर्थात् "दश कुओं के बराबर एक बावडी, दस बावडियों के बराबर एक तालाब, तथा दस तालाबों के बराबर एक पुत्र और दस पुत्रों के बराबर एक वृक्ष है।" इस प्रकार पर्यावरण, मानव को संसाधन ही नहीं जुटाता अपितु वह उसका जन्मदाता, पोषक एवं रक्षक है। वेदों में भी प्राचीनतम ऋग्वेद में पर्यावरणीय तत्त्वों का कई स्थान पर वर्णन मिलता है। दीर्धतमा ऋषि ने मुख्य रूप से चार तत्त्वों का उल्लेख किया है–

**सकृद्ध द्यौरजायत सकृद्भूमिरजायत**
**पृश्न्या दुग्धं सकृत्पयस्तदन्यो नानु जायते।**[१]

---

१. ऋ. ६/४८/२२

अर्थात्–"निश्चय ही सूर्य एक बार उत्पन्न हुआ। भूमि एक बार उत्पन्न हुई, अन्तरिक्ष एक बार उत्पन्न हुआ तथा जल एक बार ही उत्पन्न हुआ। इसके अतिरिक्त अन्य उत्पन्न नहीं हुआ। क्योंकि सृष्टि के लिए इतने ही तत्त्व पर्याप्त थे। शेष सब इन्हीं से उत्पन्न माने गए हैं।"

आज, समस्त मानवजाति का यदि किसी बिन्दु पर ध्यान केन्द्रित है तो वह है 'पर्यावरण'। जिस 'पर्यावरण' ने आरम्भ से ही प्राणियों को उत्पन्न किया, पोषित किया, विशुद्ध पर्यावरण के सानिध्य से ही मानवजाति ने निरन्तर सफलताएँ अर्जित की हैं, वही पर्यावरण को बुद्धिजीवी मानव ने अपने तुच्छ भौतिक स्वार्थ के लिए तथा अनुचित कार्यों से इतनी तीव्रता से प्रदूषित किया है कि अब प्राणिमात्र के लिए महाविभीषिका विकराल रूप से उपस्थित हुई है जो हमारे 'पृथ्वी' ग्रह के भविष्य को गंभीर हालत में बदलती जा रही है। परिवर्तन की प्रक्रिया वर्तमान अन्तर्राष्ट्रीय नीतियों को चुनौती देती है। सृष्टि के रहस्योद्घाटन के फलस्वरूप व्याप्त पर्यावरण प्रदूषण, विश्व के समक्ष एक गंभीर चुनौती बनकर खड़ा है। मनुष्य, संसाधनों का उपयोग करके उन्हें नष्ट करता जा रहा है, उनका पुनः निर्माण नहीं कर रहा है। निरन्तर बढ़ते प्रदूषण से जो संकट गहराया है उनमें वायुप्रदूषण, जलप्रदूषण, भू-प्रदूषण, वन-विनाश, ऊर्जा-संकट आदि हैं। पर्यावरण-संकट आज किसी भौगोलिक सीमा में न बँधकर विश्वव्यापी समस्या बन गया है। पर्यावरण के प्रति समझ एवं संवेदनशीलता विकसित करना, प्रदूषण की समस्याओं के समाधान प्रस्तुत करना एवं पर्यावरण में संतुलन बनाए रखना आज की सबसे बड़ी आवश्यकता है।

आज जब सम्पूर्ण विश्व में पर्यावरण की वर्तमान एवं भविष्य की समस्याओं का समाधान खोजने का प्रयास किया जा रहा है तब ऐसे वक्त में, वेदों में ऋषियों ने जो पर्यावरण संरक्षण की गहरी समझ दी है उसका दर्शन करना चाहिए। अथर्ववेद के ऋषि ने कहा है–"यह भूमि माता के समान सबकी पोषक है और मैं पुत्र के समान इस भूमि का रक्षक हूँ।"[१] वर्तमान समय में ऐसा प्रतीत होता है मानो, मानव सब कुछ उपयोग करके समाप्त कर देना चाहता है। आज के मानव को पर्यावरण से न तो आत्मीयता है, न संवेदनशीलता। 'अथर्ववेद' में 'अथर्वा' ऋषि ने पृथ्वी के प्रति संवेदना का अद्वितीय उदाहरण प्रस्तुत किया है–

**यत्ते भूमे विखनामि क्षिप्रं तदपि रोहतु।**
**मा ते मर्म विमृग्वरि मा ते हृदयमर्पिपम्॥**[२]

अर्थात् "हे भूमि! मैं तेरा जो भाग खोदूँ वह शीघ्र ही पुनः पूर्ण हो जाए (उग आवे) हे खोदने योग्य भूमि! मैं न तो तेरे मर्मस्थल को चोट पहुचाउँ और न ही तेरे हृदय को पीड़ित करुँ।"

---

१. माता भूमिः पुत्रोऽहं पृथिव्याः। अथर्ववेदः १२/१/१२

२. **अथर्ववेदः १२/१/३५**

अयं खलु शब्दार्थतत्त्वयोः पण्डितः आसीत्, वाण्याः सन्दर्भे स खलु मच्चिन्तनं व्यदधात्। वाग्देवी वश्येव समन्वर्ततेति तथ्यं स्वयमेवोद्धुष्यते तेन–

**'यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्तते'** इति।

कविरयं ग्रन्थस्य मङ्गलाचरणं वाण्याः स्तवनेनैव करोति। यथा–

**इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे।**
**विन्देम देवतां वाचममृतामात्मनः कलाम्॥**[१]

अत्र देवतावाचम् इत्यनेन शब्दब्रह्मणः बोधो भवति। अमृताम् इत्यनेन शब्दस्य अविनाशित्वं नित्यत्वं वा ध्वन्यते। आत्मनः कलाम् इत्यनेन बोधो भवति यत् वाक्तत्त्वं शब्दब्रह्मणः कला अंशभूतमस्ति। दैनिकजीवने वाण्याः प्रयोगविषये कविरयं महदौदार्यं प्रदर्शयति। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते इति सिद्धान्तमनुसरन् स कथयति यत् वार्ताक्रमे वाण्याः प्रयोगो मुक्त-भावेन अस्माभिः करणीयः। छिद्रान्वेषिणः जनास्तु समेषां वाण्यां दोषदर्शनं कुर्वन्त्येव किन्तु तेन न कदापि दैन्यमनुभाव्यमिति।

**सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।**
**यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः॥**[२]

सामान्यजनानां वाणी अर्थमनुसृत्य सम्प्रवर्तते, किन्तु ये जनाः वाग्योग्विद्रूपेण ऋषिपदमारुढाः सन्ति तेषां वाण्याः अनुगमनमर्थ एव करोति। तेभ्यः सुवासा वाणी जायेव तन्वं विसस्रे।

**लौकिकानां हि साधूनामर्थं वागनुवर्तते।**
**ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति॥**[३]

वाचः महत्त्वं स्वयमेव सिद्धमस्ति। वागेव मानवानामभिलाषाः पूरयति। दौर्भाग्यमपाकरोति, कीर्तिं चोत्पादयति। इयं दुष्टानां शमनमपि करोति। सुनृता वाणी समेषां मङ्गलानां मातृरूपेण विद्यते। किन्तु उन्मादग्रस्ता दृप्ता च वाणी राक्षसीवास्ति। किञ्च, सा हि सर्ववैराणां कारणभूता, तथा लोकतिरस्कारस्य जनयित्री। अस्माद्धेतोः मधुरा वाणी एव ऋषिभिः प्रशंस्यते।

**ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः।**
**सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः॥**[४]

१. उत्तररामचरितम् १.१
२. तदेव १.८
३. तदेव १.१०
४. तदेव ५.२९

शब्दतत्त्वस्य सूक्ष्मविश्लेषणरूपेण भवभूतिना शब्दब्रह्मविषयेऽपि स्वकीयो विचारः सन्दर्शितः। जगदिदं शब्दब्रह्मणः विवर्तः तथा चोक्तं भर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे–

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**[१]

शब्दब्रह्मणः एतादृशमेव स्वरूपं वर्णयति भवभूतिः। वाल्मीकिसन्दर्भे आत्रेयीमुखेन स वाण्याः अलौकिकं स्वरूपं वर्णयति–

तेन हि पुनः समयेन तं भगवन्तं प्रति प्रकाशमृषिमुपगम्य भगवान् भूतभावनपद्मयोनिरवोचत्-ऋषे! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि। तद् ब्रूहि रामचरितम्। अत्याहत ज्योतिरार्षं ते चक्षुः प्रतिभातु। आद्यः कविरसि-इत्युक्त्वान्तर्हितः। अथ स भगवानप्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणः तादृशं विवर्त-मितिहासं रामायणं प्रणिनाय।[२]

अनेनानुशीलनेन सुस्पष्टं यत् महाकविः भवभूतिः वस्तुतः न केवलं साहित्यशास्त्रमर्मज्ञः अपितु पदवाक्यप्रमाणज्ञोऽपि अस्ति। उत्तररामचरितस्य प्रस्तावनायां कथितमेवास्ति पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जतुकर्णीपुत्रः। अत एव वक्तुं शक्यते यत्–

**भवभूतेः कवीन्द्रस्य वाणी कामदुधा मता।**
**ब्रह्मानन्दसहोदर्यः या तनोति मुदं सदा।।**

---

१. वाक्यपदीयम् १.१
२. उत्तररामचरितम् अंक २

# भूमौ ध्रुवस्थितिः

डॉ॰ आशुतोषकुमारझा

पृथिव्याः गतिः द्विविधा भवति प्रथमा दैनन्दिनी गतिः द्वितीया चा सांवत्सरिकी। क्रान्तिवृत्तौ चलन्ती पृथिवी षष्ट्युत्तरशतत्रयात्मकेषु दिवसेषु अस्य वृत्तस्यैका परिक्रमा पूर्णं करोति। गतिरियं पृथिव्याः सांवत्सरिकी। पृथ्वी क्रान्तिवृत्तौ चलति, स्वाक्षे च परिभ्रमति अर्थात् चतुर्विंशतिहोरायां स्वाक्षं परितः परिभ्रमति, चलति गतिरियं दैनन्दिनी जाता पृथिव्याः। अयमेवाक्षः पृथिव्याः 'ध्रुव' नाम्ना ख्यातः। आभ्यां दक्षिणोत्तरध्रुवौ दक्षिणोत्तरदिशायामवस्थितते सति क्रमेण 'दक्षिणीध्रुवः', 'उत्तरीध्रुवः' च विख्यातः। दक्षिणोत्तरध्रुवाभ्यां भूत्वा गच्छन्तः वृत्तः याम्योत्तरवृत्तरूपेण प्रसिद्धः। अनयो याम्योत्तरवृत्तयोर्मध्ये अर्थादुत्तरध्रुवात् १०° दक्षिणे, दक्षिणध्रुवात् १०° उत्तरभागे विषुवद्वृत्तः भवति। विषुवद्वृत्तो एव कालवृत्तरूपेणापि ज्ञायते। यः वृत्तः अखण्डां पृथ्वीं द्वे समभागे विभाजयति। यत्र भगवान् सूर्यः वसति। येन कारणेन द्युरात्रिर्जायते। अनेन विधिना उत्तरीध्रुवं विद्यते इति तु समुचितमेव। यदि पूर्णरूपेण उत्तरदिशायां न विद्यते। तदा याम्योत्तरवृत्ते तु विद्यते एव। क्षितिजवृत्तेन ज्ञायते यद् ध्रुवस्य यदि कश्चिद् नियतविन्दुर्विद्यते तु स्वोत्तरात् कियदुपरिनीच्चैः वा विद्यते।

शतपथब्राह्मणः ध्रुवस्य सम्बन्धे उक्तवान् यत् यज्ञपुरुषस्य नाभितो उपरिभागः 'प्राची' अधोभागश्च 'प्रतीची' कथ्यते। यज्ञपुरुषस्य नाभितो पश्चिमप्राण एव ध्रुवः कथ्यते। एतदतिरिक्तं पृथिव्याः स्वप्रतिस्वस्तिकप्रतिष्ठितः प्राणोऽपि तिष्ठति तदेव 'ध्रुवः' नाम्ना प्रसिद्धः विद्यते। अथ "योऽयं पश्चात् स ध्रुवः"। एतदतिरिक्तमपि ध्रुवस्य नामकरणसन्दर्भे कथितवान् यत्–

"देवा ह वै यज्ञं तन्वानास्तेऽसुरराक्षसेभ्य आसङ्गाद् विभयांचक्रुः। तान् (देवान्) दक्षिण-तोऽसुराक्षसान्यासेजुः। तेषामेतान्दक्षिणान् ग्रहान्–उज्जधनुः। अप्येतं दक्षिणं हविर्धानं भुज्जधनुः। अथैतमेव न शेकुरुद्धन्तम् तत् उत्तरमेव हविर्धानं दक्षिणं हविर्धानमदृहत्। तदेतं न शेकुरुद्धन्तम् तस्मात् ध्रुवो नाम्"[1]। खगोलस्थध्रुवाभ्यां पृथ्वीध्रुवयोः सम्बन्धार्थं पृथिव्याः रेखाभ्यस्तस्या कल्प्यते। पृथिव्या पिण्डः वृत्ताकारः भवति। अस्य उत्तरभागः उत्तरध्रुवप्रोतः विद्यते दक्षिणभागश्च दक्षिणध्रुवपोतः तिष्ठति। वस्तुतः पृथ्वी याम्योत्तरध्रुवयोः मध्यभागे अवस्थिता विद्यते। अत्रैव ध्रुवरूपे कीलके धराचतुर्विंशतिहोरायां भ्रमणमेकं पूर्णं करोति। कीलकोऽयं पौराणिकैः "मेरु" रूपेण स्वीक्रियते। अयं मेरुः सुमेरुः कुमेरुश्च

---

१. श॰ ब्रा॰–-का॰ ४ अ॰ २, श्लोके–१९।

नाम्ना व्यवहृतो विद्यते। अथ मेरुः पृथिव्याः केन्द्रात् पारं भूत्वा बहिः निःसृतवान् विद्यते। धरित्र्या उत्तरभागस्य मेरुः उत्तरध्रुवादाबद्धः दक्षिणभागस्य मेरुः दक्षिणध्रुवादाबद्धो विद्यते। पृथिव्या उत्तरसीमान्तभाग एव सुमेरुर्विद्यते तत्र देवप्राणस्तिष्ठति। अतएव सुमेरुः कथ्यते एवं धरित्र्याः दक्षिणसीमान्तभागे याम्यध्रुवस्य अग्रभागे अवस्थितो मेरुः आसुरप्राणप्रधानत्वात् 'कुमेरुः' कथ्यते।

**मेरौ मेषादिचक्रार्धे देवाः पश्यन्ति भास्करम्।**
**सकृदेवोदितं तद्वदसुराञ्चलादिगम्।।[१]**

ध्रुवस्यास्तित्वः स्थिरबिन्दुरूपेण विद्यते इति नाम्ना ज्ञायते। धरायाः सुमेरुः कुमेरुश्च चक्रक्रमेणोत्तरदक्षिणध्रुवाभ्यां आबद्धो विद्यते किन्तु शतपथब्राह्मणानुसारेण ध्रुवो स्थिरो न विद्यते। ध्रुवो चलायमानः। शतपथब्राह्मणानुसारेण ध्रुवः विष्णोः नासिकां परितः परिक्रमति। परिक्रमेयं पञ्चविंशतिसहस्राब्दे पूर्णः भवति। वयं मेरुः चलायमानं पश्यामः। ब्रह्मणः काले अयं मेरुः हिरण्यशृङ्गपर्वते आसीनो आसीत् परन्त्वद्य ततो अतीवाग्रे अवस्थितोऽस्ति। अतएव ध्रुवस्य चलायमानत्वं मन्यते अस्माभिः। मेरुः ध्रुवादाबद्धो विद्यते। यदि ध्रुवयोः गतित्वं न स्यात्तदा मेरोः गतिर्न सम्भवेत्। चलायमानं मेरुः अस्माभिः दृश्यते। अते ध्रुवयोरपि गतिः सिद्धयति। "नाकस्था विष्णोः परितस्तु वेदध्वरव्यासार्धगं संचरति ध्रुवं ध्रुवः।" कमलाकरभट्टमहोदयेनापि गतिशीलं ध्रुवं स्वीकृतम्–

**"ध्रुवतारां स्थिरां ग्रन्थे मन्यते ते कुबुद्धयः।**
**साकं तैस्तुविवादोऽपि सतां मूढत्वमेव हि।**
**ध्रुवस्थानस्थितं यद्यत् कदम्बभ्रमणेन भ्रम्।।[२]"**

अर्वाचीनज्योतिर्विज्ञानानुसारेण खगोलस्य यो बिन्दुश्चलोदृश्यते। ध्रुवस्थानं कथ्यते। उत्तरध्रुवस्थानाति-समीपवर्तिनक्षत्रं ध्रुवः कथ्यते। इष्टस्थानस्य अक्षांशनिर्णयो ध्रुवप्रदेशस्य वेधेनोन्नतांशमधिगम्य भवति, अत एव काले काले–

ध्रुवोन्नतांशानां वेधान् कुर्वन्ति। अद्भुतं दृष्टं तैर्यदुन्नतांशानां किञ्चिदतिसूक्ष्मातिसूक्ष्मान्तरं दृश्यते काले–काले। बहुकालपर्यन्तं वेधान् विधाय तैर्निश्चितं यद् ध्रुवस्य विचलनं पार्थिवध्रुव-विचलनाज्जायते। पार्थिवध्रुवयोर्विचलनमिदं अतिसूक्ष्मातिसूक्ष्मम् अर्थात् प्रत्येको ध्रुवः ४० फिट पर्यन्तमेव विचलति। सर्वाधिकं विचलनमप्येकाया विकलाया न्यूनमेव। ध्रुवविचलनं 'आइलर' महोदयेन गणितेनैव सूचितम् पश्चात् वेधेन निर्णीतम्। ध्रुवो निजमध्यमस्थानाद् द्विप्रकारकया गत्या विचलति। प्रथमगतेरान्दोलनं ०.१८ आवृत्तिकालः ४३२ दिनानि, द्वितीयगतेरन्तरान्दोलनं".०९ आवृत्तिकालश्च ३६५ दिनानि।

---

१. सू॰ सिद्धान्त–भूगोलाध्याये–श्लोके–६७।
२. सि॰ त॰ वि॰ मध्यमाधिकारे गोलपरिचये श्लोके–७९–८०।

ज्योतिषशास्त्रे पृथिव्याः दिग्देशकालानां निर्धारणे ध्रुवस्य महती भूमिका सिद्ध्यति। इमौ बिन्दू स्थिरौ मत्वा वृत्तानां निर्माणं भवति तथा ज्योतिशास्त्रं पृथिव्यां भूयमानेषु क्रिया कलापेषु आभ्यामेवदृष्टिपातं करोति। सूर्यसिद्धान्तकारः ध्रुवस्य स्थानस्य निर्धारणविषये-

**मेरोरुभयतो मध्ये ध्रुवतारे नभः स्थिते।**
**निरक्षदेशसंस्थानामुभये क्षितिजाश्रये।।**[१]

ध्रुवविषये भास्कराचार्येणैवं कथितम्-

**सौम्यं ध्रुवं मेरुगताः खमध्ये याम्यं च दैत्याः निजमस्तकोर्ध्वे।**
**सव्यापसव्य-भ्रमहक्षचक्रं विलोकयन्ति क्षितिजप्रसक्तम्।।**[२]

ग्रहकक्षानक्षत्रचक्रमनवरतं ध्रुवद्वयाधारं प्रवह्यानिलेरितं परिभ्रमति। नक्षत्रमण्डलं ध्रुवेन सह आवद्धः। नक्षत्रमण्डलस्य आधारः ध्रुवः। कूर्मपुराणे एवं भणितम्-

**सर्वे ध्रुवे महाभागा निबद्धा वायुरश्मिभिः।**
**ग्रहर्क्षताराधिष्यानि ध्रुवे बद्धान्यशेषतः।।**
**भ्रमन्ति भ्रामयन्त्येनं सर्वाण्यनिलरश्मिभिः।।**[३]

नक्षत्रमण्डलध्रुवमध्यसम्बन्धविषये सूर्यसिद्धान्ते-

**भचक्रं ध्रुवयोर्नद्धमाक्षिप्तं प्रवहानिलैः।**
**पर्येत्यतजस्त्रं तन्नद्धा ग्रहकक्षा यथाक्रमम्।।**[४]

ध्रुवेन सह कालनिर्धारकस्य प्रत्यक्षसम्बन्धः यत् क्रान्तिमण्डले अर्कः निरन्तरं भ्रमति। क्रान्तिमण्डलः कदम्बस्थानात् ९०° अंशात्मकः वृत्तः तथा च ध्रुवस्थानात् जिनांशैः २४ वृत्तं कदम्बवृत्तम्-

**जिनांशैर्यद् ध्रुवाद् वृत्तं कदम्बर्क्षमण्डलम्**
**यतस्तस्मिन् कदम्बर्क्षं भ्रमति प्रवहेरितम्।**
**यत् कदम्बान्नवत्यंशैर्वृत्तं तत् क्रान्तिमण्डलम्।।**[५]

अतोऽत्र कालनिर्धारणे ध्रुवस्य महती भूमिका। गोलः प्रसिद्धः ज्योतिशास्त्रे। गोलोऽपि ध्रुवः स्थिरः मन्यते। यथा ज्योतिर्विदेन श्रीसीतारामझोपाख्येन कथितम्-

१. सू० सिद्धान्त-भूगोलाध्याये-श्लोके-४३।
२. सि० शि० गोलाध्याये भुवन कोशे, श्लोके-४१।
३. कूर्मपुराणे अ० ४६, श्लो० ३०।
४. सू० सिद्धान्त-भूगोलाध्याये-श्लोके-७३।
५. गोलपरिभाषायाम्, श्लोके २८।

भूमौ ध्रुवस्थितिः



**भूकेन्द्राद् ध्रुवगं सूत्रं यद्गोले यत्र संयुतम्।**
**तद्गोले तद् ध्रुवस्थानं गोलविज्ञैर्निगद्यते॥[1]**

गोलः ध्रुवाधारः। गोले द्वावेव बिन्दू स्थिरौ। तत्र कालनिर्धारकः विषुवद्वृत्तः ध्रुवस्थानात् नवत्यंशात्मकं वृत्तम्। तद्धरातलगतो देशो निरक्षदेशः। निरक्षदेशे अक्षांशाभावः। अक्षांशदेशान्तरयोर्निधारकः ध्रुवः। ध्रुवाक्षांशदेशान्तरयोर्मध्ये सम्बन्धविषये सूर्यसिद्धान्ते अनेन प्रकारेण वर्णितम्–

**अतो नाक्षोच्छूयस्तासु ध्रुवयोः क्षितिजस्थयोः।**
**नवतिर्लम्बकांशास्तु मेरावक्षांशकास्तथा॥[2]**

निरक्षदेशध्रुवयोरन्तरं भूपरिधिश्चतुर्थांशतुल्यम्। निरक्षदेशस्य कोणात्मकमन्तरं ९०° 'नवत्यंशात्मकः' भवति। अतः ध्रुवः देशा निर्धारकः ज्योतिषशास्त्रे। दिक्निर्धारकोऽपि ध्रुवः।

**खमध्यध्रुवयोर्लग्नं वृत्तं याम्योत्तरं तथा।[3]**

अतः निरक्षदेशस्य क्षितिजवृत्ते ध्रुवौ अवस्थितौ। यथा भास्कराचार्येण भणितम्–

**निरक्षदेशे क्षितिमण्डलोपगौ ध्रुवौ नरः पश्यति दक्षिणोत्तरौ।**
**तदाश्रितं खेजलयन्त्रवत्तथा भ्रमद्भचक्रं निजमस्तकोपरि॥[4]**

अतो ज्योतिशास्त्रे त्रिप्रश्नसमाधाने ध्रुवस्य महती भूमिका वर्त्तते।

---

१. गोलपरिभाषायाम्, श्लोके १४–१५।
२. सू॰ सिद्धान्त--भूगोलाध्याये–श्लोके–४४।
३. गोलपरिभाषायाम् श्लोके–१७।
४. सि॰ शि॰ गोलाध्याये भुवनकोशे श्लोके–४२।

ज्योतिषशास्त्रे पृथिव्याः दिग्देशकालानां निर्धारणे ध्रुवस्य महती भूमिका सिद्ध्यति। इमौ बिन्दू स्थिरौ मत्वा वृत्तानां निर्माणं भवति तथा ज्योतिशास्त्रं पृथिव्यां भूयमानेषु क्रिया कलापेषु आभ्यामेवदृष्टिपातं करोति। सूर्यसिद्धान्तकारः ध्रुवस्य स्थानस्य निर्धारणविषये-

**मेरोरुभयतो मध्ये ध्रुवतारे नभः स्थिते।**
**निरक्षदेशसंस्थानामुभये क्षितिजाश्रये।।**[१]

ध्रुवविषये भास्कराचार्येणैवं कथितम्-

**सौम्यं ध्रुवं मेरुगताः खमध्ये याम्यं च दैत्याः निजमस्तकोर्ध्वे।**
**सव्यापसव्य-भ्रमहक्षचक्रं विलोकयन्ति क्षितिजप्रसक्तम्।।**[२]

ग्रहकक्षानक्षत्रचक्रमनवरतं ध्रुवद्वयाधारं प्रवह्यानिलेरितं परिभ्रमति। नक्षत्रमण्डलं ध्रुवेन सह आवद्धः। नक्षत्रमण्डलस्य आधारः ध्रुवः। कूर्मपुराणे एवं भणितम्-

**सर्वे ध्रुवे महाभागा निबद्धा वायुरश्मिभिः।**
**ग्रहर्क्षताराधिष्यानि ध्रुवे बद्धान्यशेषतः।।**
**भ्रमन्ति भ्रामयन्त्येनं सर्वाण्यनिलरश्मिभिः।।**[३]

नक्षत्रमण्डलध्रुवमध्यसम्बन्धविषये सूर्यसिद्धान्ते-

**भचक्रं ध्रुवयोर्नद्धमाक्षिप्तं प्रवहानिलैः।**
**पर्येत्यतजस्त्रं तन्नद्धा ग्रहकक्षा यथाक्रमम्।।**[४]

ध्रुवेन सह कालनिर्धारकस्य प्रत्यक्षसम्बन्धः यत् क्रान्तिमण्डले अर्कः निरन्तरं भ्रमति। क्रान्तिमण्डलः कदम्बस्थानात् ९०° अंशात्मकः वृत्तः तथा च ध्रुवस्थानात् जिनांशैः २४° वृत्तं कदम्बवृत्तम्-

**जिनांशैर्यद् ध्रुवाद् वृत्तं कदम्बर्क्षमण्डलम्**
**यतस्तस्मिन् कदम्बर्क्षं भ्रमति प्रवहेरितम्।**
**यत् कदम्बान्नवत्यंशैर्वृत्तं तत् क्रान्तिमण्डलम्।।**[५]

अतोऽत्र कालनिर्धारणे ध्रुवस्य महती भूमिका। गोलः प्रसिद्धः ज्योतिशास्त्रे। गोलोऽपि ध्रुवः स्थिरः मन्यते। यथा ज्योतिर्विदेन श्रीसीतारामझोपाख्येन कथितम्-

१. सू० सिद्धान्त-भूगोलाध्याये-श्लोके-४३।
२. सि० शि० गोलाध्याये भुवन कोशे, श्लोके-४१।
३. कूर्मपुराणे अ० ४६, श्लो० ३०।
४. सू० सिद्धान्त-भूगोलाध्याये-श्लोके-७३।
५. गोलपरिभाषायाम्, श्लोके २८।

